न'न्वहम्मे'त्याभ्याङ्खलु पदाभ्यां प्रश्नप्रतिवचनानुकूलव्यवहारनिर्वाहकाभ्यामनेकत्र भगवद्व्याहारधाराया गीतायामुपेतत्वे ततोऽतिरिक्तकर्तृताकल्पना न न्याय्येति चेन्नैवम्। 'अहम्ममे,तिपदयोस्तत्रत्ययोरन्यार्थत्वात्। न हि भगवानात्मन उपाधिभूतं वै देहं व्रजवसुमत्यादिसमुन्मिषितविलासाद्यास्पदं च विषयीकृत्य तत्तादात्म्याभिमानजन्यव्यवहारकर्तृतयाऽऽत्मानं पदाभ्यामेताभ्यामभिधत्ते। न वा 'बहूनि मे व्यतीतानि जन्मानी'त्यात्मवचनगम्यमानप्राचीनवपुरवच्छिन्नव्यवहारनिवहाभिमानितया तस्य वर्तेते पदे ते। अपित्वपमृदिताशेषविशेषेण वपुरादिविक्रियासहस्रैकसाक्षिणा ब्रह्मणा शिवेन स्वरूपसत्तया तादात्म्यमभिपन्नस्याविर्भूततन्महोमाहात्म्यस्य गीताभिस्तत्वस्यार्जुनम्प्रत्युपदेशविशेषवेलायां भगवतः कृष्णस्य वाचौ ते तद्दृष्टया सङ्गच्छेते। ब्रह्मविदामात्मोपदेशदशायान्तत्तादात्म्याभिमानवा'ह्यहम्ममे, त्यादिवचोविभेदैर्व्यवहरणस्य स्वरूपानुसंन्धानसंपत्या श्रुत्यादावनुभूयमानत्वात्। यथा चाम्नायते। अग्निरस्मि जन्मना जातवेदाः। अहं राष्ट्रैर्वसुभिश्चरामि गर्भे नु सन्नन्वेषामहं देवानां जनिमानि विश्वा। अहं मनुरभवं सूर्यश्च। योऽसावादित्ये पुरुषः सोऽसावहम्। योऽसावसौ पुरुषस्सोहमस्मि। दृशिस्वरूपं गगनोपमं परं सकृद्विभातं त्वजमेकमक्षरं। अलेपकं सर्वगतं यदद्वयं तदेव चाहं सकलं विमुक्त ओमिति। दृशिस्तु शुद्धोऽहमविक्रियात्मको न मेऽस्ति कश्चिद्विषयः स्वभावतः पुरस्तिरश्चोर्ध्वमधश्च सर्वशः सुपूर्णभूमाऽहमितीव भावये''त्यादिकमृक्सामसंहितादौ। एवञ्च 'ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठती'त्यादिना परोक्षतया तावत्कथनं भगवतो महेश्वरात्मसाम्राज्यसत्तासमवगाह्येव सद्गीतायास्तत्तन्त्रतामादरभरैरभिगमयति। एतदेवाभिप्रेत्य भगवच्चरणैर्भाष्यादौ 'तदुक्तमीश्वरगीताया'मित्यादिपदविशेषरुन्नीयमानोदाहरणवैखरी हि यथोदाहृतलाटचायनधर्मसूत्रार्थतात्पर्यानुग्राहिणीति गम्यते नूनं यथायोगम्। इत्थञ्च गीता हीयं महेशलीलाप्रसादप्रभवैव सम्मीयते। न तु जातु पाण्डवसङ्ग्रामैककालीनोत्पत्तिमती। किन्तर्हि यथोपदर्शितसूत्रादिप्रादुर्भूतितुल्यकक्षाकाऽथ सनातनीति सिद्धम्।

१९ गीतायामहम्ममेति वचनानां भगवतो निरुपाधिकब्रह्मस्वरूपानुसंन्धानगमकतामात्रपरतैव नतु किञ्चिद्देहावच्छिन्नयादवेन्द्रबोधकतेतिकथनम्।

एतावता निरूपणेन महेश्वरे समारोपितानान्तावद्दूषणानाञ्जीवत्व—विष्णुदासत्व—तामसत्वादिभेदभिन्नानाम्पराकरणपूर्वकं वैष्णवत्वासिद्धिः प्रतिष्ठापित-

१० वैष्णवमतानां वेदादिवाह्यतासंसिद्धिपुरस्सरं तदभ्युपेततप्तांकनादिपञ्चसंस्काराणां वृथात्वमानाभासविपर्ययत्वव्यवस्थापनोपक्रमः ।

तराऽपि तैरेतैरुपस्थापितदुर्वादतमस्तोमानां नाम पञ्चसंस्कारदुश्चेष्टावेष्टितानामवशिष्टतयाऽत ऊर्ध्वम्प्रकृष्टप्रमाणप्रकाशरश्मिभिरपहारो विधास्यते तथा हि । "तापःपुण्ड्रस्तथा नाम मन्त्रो यागश्च पञ्चमः । अमी परमसंस्काराः परमैकान्त्यहेतव" इत्यादिकं वचनं भारद्वाजीयतयोदाहरद्भिर्दग्धाङ्गैः परिगणिता भवन्ति पञ्चसंस्काराः । तल्लक्षणलक्षिता च वैष्णवदीक्षा पुनस्तैरभिमन्यते । अत्रैवम्पुनश्चिन्त्यते किमिमे श्रौता उत स्मार्ता आहोस्वित्पौराणिका अथवा तान्त्रिका इति । न प्रथमः । तन्निरूपकश्रुतिवचनस्यात्यन्ताभावात् । नं द्वितीयः । तथाविधायाः स्मृतेरप्यप्रसिद्धेः । न वा तृतीयः । तन्निर्धारणाधीनवचसः पौराणिकस्येतरेतरविगानाविषयत्वात् । नापि चतुर्थः । श्रुत्यादिबाह्यतन्त्राणान्तावदतन्त्रताव्यवहारयोगयोग्यत्वात् । परिशेषादिमे दुराग्रहैकविग्रहा एवोपनमन्ते । पञ्चसंस्काराः कृत्स्नप्रमाणपदवीबहिर्वासरूषितत्वेऽपि तद्वृत्तादुरावेशकलुषीकृतचेतःप्रचारचित्रितत्वात् । ननु स्मृतेरेतस्या 'मन्वात्रिविष्णुहारितयाज्ञवल्क्ये'ति स्मृतिकारनामोत्कीर्तनप्रतीतिमत्पराशरस्मृतिगिरा परिगदितहारीतप्रणेतृकत्वे कोन्वत्र विद्वेषो विज्ञापितसंस्कारव्यक्तौ वेदवाग्वल्लीविलासलास्यायामिति । नायन्दोषः । मन्वत्रिमैत्रावरुणियाज्ञवल्क्यगौतमादिभिरप्रतिपादिततत्संस्कारवादित्वादेव स्मृतेरेतदीयायाः । न चेतरेतरानिरूपितविषयविशेषनिरूपकत्वादितरेतरस्य स्मृतिकृतान्तत्र तत्र गम्यमानतया नेदमारोहेद्दूषणसरणाविति वाच्यम् । सत्वेन संवादास्थितेस्तथाविधार्थस्य प्रामाण्याभ्युपगमादत्र तु स्मृतिकारान्तरस्य संवादसामान्याभावोन्मीलनाच्च । यदि स्मृतिप्रवृत्तिमूलीभूतश्रुतेरत्रार्थे कथञ्चिद्वानिर्भरः स्यात्तदा तत्तत्वरहस्यपारदृश्वानः स्मृतिकारास्ते कुत एतन्निजकर्तव्यतया नाभिदध्युः पञ्चसंस्कारान् । मूलीभूतश्रुतेरेवाभावात्तु स्मृतवन्तो नेत्येतान्त एवमित्यनुजानीमहे । यदि त्वेकेन वा हारीतेन स्मृतिकृता समुन्नीताः पुनरेते संस्काराः श्रुतिमूलाः कुतो न स्युरित्याक्षिप्येत तर्हि तदनुवादकस्मृत्यन्तराभावात्क्षेपकाविषयास्त एवेति प्रत्याक्षेपाकरणे विनिवारको हेतुः को वा सत्कोटिकः स्यात् । यदि पुनः परिगणितास्त्वेव पदविशेषमहिम्ना स्मृतिषु तासु गम्यन्ते त इति चेदुच्येत तदपि तद्व्याख्यातृमेधातिथिधानञ्जयरामचन्द्रराघवानन्दकुल्लूकभट्टविज्ञानेश्वराश्रमपुरोगैरात्मनिबन्धेषु पूर्वपूर्वतरव्याख्यानानतिलङ्घि-

ऽयाख्यानगोचरप्रज्ञाकैः कुतस्ते अस्पृष्टतराः स्युः । न च भगवदैकान्तिकधर्ममात्रप्रतिपादिनीभिर्भारद्वाजादिस्मृतिगीर्भिर्गम्यन्त एव संस्कारा ह्येत इति सन्तोष्टव्यम् । मन्वाद्यनुन्नीतप्रमेयाप्रतिपादनैकशीलत्वाद्भारद्वाजादीनां नाम वेदविदाम् । मन्वादिभिर्हि निषेकादिश्मशानान्तान्ब्राह्ममुहूर्तोपक्रमप्रदोषपरिसमापनीयान्नित्यनैमित्तिककाम्यकर्मोपासनासम्भारांश्च ब्रह्मतत्वम्पुनरन्ते परपुरुषार्थसमर्थनैकबद्धश्रद्धं ननु सप्रातिज्ञमुन्नीतवद्भिः पुमर्थोपायकात्स्न्र्यस्य संक्षेपविस्तराभ्याम्प्रसाधिततया तदनुपदर्शितप्रमेयभेदस्य तु प्रधानभूतस्यानुवर्तिततया च धर्मा एव निरूपणीया इन्तानवशिष्यमाणास्सन्तो भगवदैकान्तिकधर्मनिकरनिरूपणक्रियामूकीभावे नात्मलाभो न परहानिर्वैत्यपाक्षिकविचारचातुरीसह्या कथमस्मात्प्रमाद्येत । कथं वा तदनभ्युक्तार्थग्राही स्वयम्पुनः प्रसिद्ध्येत । न हि तादृग्विचाररमणीयः कश्चिद्वा सदर्थात्प्रमाद्यत्येवंविधेऽर्थे प्रमुह्यति वा । ननु त्रिपुण्ड्रोर्ध्वपुण्ड्रादिकर्तव्यताविधानस्य मन्वादिभिरनभ्यर्हितत्वेऽपि तदितरोन्नीतप्रयोगनिबन्धैस्तदवश्यानुष्ठेयताम्बुध्वाऽनुष्ठातारो यथा वा स्वार्थैरुपनिबध्यन्ते तथैवात्रेतिकर्तव्यतासंस्काराणामपीति चेन्मैवम् । दृष्टान्तस्य वैधर्म्यात् । त्रिपुण्ड्रोर्ध्वपुण्ड्रादीनां मन्वादिभिः कण्ठरवेणानुक्तत्वेऽपि कल्पगृह्यसूत्रादिभिर्यथानियममुपात्ततयोक्तसंस्कारसाधर्म्यानुपपत्तेः । एवन्तर्हि ततो वैधर्म्यतया वा तदादरः किन्न स्यादिति चेद् गृह्यादिभिरप्यनभ्युक्तत्वादित्युक्तोत्तराभिसन्धेरप्रस्मर्तव्यत्वात् । न नु च भोः कापिलकणादादिवचोवद्भारद्वाजहारीताद्युक्तीनामुदितसंस्कारगोचराणां तावत्स्वातन्त्र्येण प्रामाण्यं कुतो न स्यादिति चेदत्रोच्यते । भरद्वाजहारीतादीनान्तावच्छ्रौतत्वे कपिलकणादादीनान्तु ततो बाह्यत्वे च वैदिकेऽर्थे तद्धर्मानुष्ठानप्रभवप्रकृष्टयोग्यतावतान्नाम तेषां स्वातन्त्र्यगन्धस्याप्यप्रसक्तेरिति । ननु पुनर्मन्वादिस्मृतिप्रदेशेषु संस्कारा अमी न परिगणिता इति कथं ज्ञायतामस्माभिरिति चेदित्थम् । तैरुन्नीतसंस्कारकदम्बके यथोदितसंस्काराणामत्यन्तानुपलम्भात् । त एते पञ्च संस्काराः शरीरमात्रसम्बन्धितया दग्धाङ्गैरभिमन्यमाना अप्यनुल्लिखिता एवात्यन्तं स्मृतिषु मन्वादीनां च यतः । मन्वादिभिरैककण्ठ्येन प्रतिपादितास्तु संस्काराः "वैदिकैः कर्मभिः पुण्यैर्निषेकादिर्द्विजन्मनाम् । कार्यः शरीरसंस्कारः पावनः प्रेत्य चेह च ॥ गार्भैर्होमैर्जातकर्मचौडमौञ्जीनिबन्धनैः । बैजिकं गार्भिकंचैनो द्विजानामपमृज्यते ॥ स्वाध्यायेन व्रतैर्होमैस्त्रैविद्येनेज्यया सुतैः । महायज्ञैश्च यज्ञैश्च ब्रा-

छ्वीयं क्रियते तनु,,रित्यादिना विश्रुता भवन्ति । एतद्वचनविवरणाय्ञ्जानवाक्यं हि गौतमस्य भगवतो "गर्भाधानपुंसवनसीमन्तोन्नयनजातकर्मनामकरणान्नप्राशन-चौडोपनयनं चत्वारि वेदव्रतानि स्नानं सहधर्मचारिणीसंयोगः पञ्चानां यज्ञाना-मनुष्ठानं देवपितृमनुष्यभूतब्रह्मणामेतेषाञ्चाष्टकाः पार्वणश्राद्धश्रावण्याग्रहायणी चैत्राश्वयुजीति सप्तपाकयज्ञसंस्थाः । अग्न्याधेयमग्निहोत्रं दर्शपूर्णमासावाग्रयणं निरूढपशुबन्धसौत्रामणीति सप्त हविर्यज्ञसंस्थाः । अग्निष्टोमोऽत्यग्निष्टोम उक्थः-षोडशिर्वाजपेयोऽतिरात्रोऽप्तोर्याम इति सप्तसोमसंस्था इत्येते चत्वारिंशत्संस्कारा" इतीदं स्मृतौ पापठ्यते । सस्मार चैतान्पुनर्भगवतो "गर्भाधानं पुंसवनं सीमन्तो जातकर्म च । नामक्रियानिष्क्रमणेऽन्नाशनं वपनक्रिया । कर्णवेधो व्रतादेशो वे-दारम्भक्रियाविधिः । केशान्तः स्नानमुद्वाहो विवाहाग्निपरिग्रहः । त्रेताग्निसङ्-ग्रहश्चेति संस्काराः षोडश स्मृताः । न वैताः कर्णवेधान्ता मन्त्रवर्जं क्रियाः स्त्रि-याः । विवाहो मन्त्रतस्तस्याः शूद्रस्यामन्त्रतो दशे"ति कृष्णद्वैपायनो भगवान् । सर्वेऽप्यमी मन्वादयो"गर्भाधानं प्रथमतस्तृतीये मासि पुंसवः । सीमन्तश्चाष्टमे मा-सि जाते जातक्रिया भवेत् ॥ एकादशेऽह्नि नामार्कस्येक्षामासि चतुर्थके । षष्ठे मास्यन्नमश्नीयाच्चूडाकर्म कुलोचितम् ॥ कृतचूडे च बाले च कर्णवेधो विधीयते । विप्रो गर्भाष्टमे वर्षे क्षत्र एकादशे तथा ॥ द्वादशे वैश्यजातिस्तु व्रतोपनयमर्हती" त्यादिना गर्भाधानमारभ्य मौञ्जीबन्धनपर्यन्तानाङ्किल संस्काराणां सन्नियतसमय-विशेषमपि स्मृतवन्तो यथाशास्त्रम् । यदि परं मृषाभाषार्णवस्थानीया न स्युरिमे संस्कारास्तर्हि कर्णवेधाख्यमप्यपरित्यजन्तःकर्म तप्ताङ्कनादीन्कथङ्कारमुज्झेयुरनुच्छृङ्-खला अपि महात्मानो महामुनयः । यद्येत इवांशतो वा वेदाक्षरैरवगताः स्युः सं-स्कारपदाभिलप्यतया तप्ताङ्कनादयस्तदा वेदविदग्रेसरैराजानसिद्धमूर्द्धन्यैः पुरुषा-र्थचतुष्टयप्रतिपादिनीष्वात्मस्मृतिषु महर्षिभिर्मन्वादिभिर्निर्वर्णितसंस्कारान्तःपातितया उदाहृताः किन्न स्युः । न तत्र तदुल्लिखितकथागन्धोऽपीति वेदबाह्या एवातितरा-मवधार्यन्ते तप्ताङ्कनादयः संस्काराभासाः ।

यत्तु सङ्कुचितार्थप्रतिपादकतया मन्वादीनान्तदनिरूपिततप्ताङ्कनादि-भगवद्धर्मप्रतिपादनपरा अपरे आर्षग्रन्थास्ततो विशिष्यन्ते इत्युक्तं तद्दुरुक्तम् । "यः कश्चित्कस्यचिद्धर्मो मनुना परिकीर्तितः । स सर्वोऽभिहितो वेदे सर्वज्ञा-नमयो हि सः ॥ सर्वन्तु समवेक्ष्येदं निखिलं ज्ञानचक्षुषा । श्रुतिप्रामाण्यतो वि-

द्वान्स्वधर्मे निविशेत वै" इत्याभ्यान्तावन्मनोः स्मरणाभ्यामाधिकारिकात्स्वर्यम्भू-ति विधीयमानधर्मतन्त्रपरातिशयसमर्थनाधीनसार्वज्ञस्य मनोर्महाराजमूर्द्धन्यस्य नि-र्दिष्टत्वात् । तद्विपर्ययप्रतीतिमत्प्रवृत्तेर्व्यतिरेकमुद्रयाऽवोधतिमिरकूपारपतनापत्तिस-पक्षत्वाच्च । एतदेवाधिकृत्य "सर्वज्ञतया चोत्सन्नविप्रकीर्णपठ्यमानवेदार्थं सम्यग्ज्ञात्वा लोकहितायोपनिबद्धवानिति" मेधातिथिकुल्लूकभट्टादिव्याख्या। त-त्र प्रवृत्ता सती शङ्कामममूम्परिहरत्येवातिवेलमित्यलमल्पीयसा किल प्रा-सङ्गिकविचारेण ।

एवञ्चैवञ्जातीयकानान्तु शङ्कासमाधानानिकराणामनेकानि ग्रन्थप्रतिनि-बन्धतात्पर्याधिक्यसमार्थितानां स्थितायां ननूच्छास्त्रशास्त्रितप्रवृत्तिप्रयुक्तानाम्युद-याभ्युदययोर्विपत्तिसम्पत्तिसमवाप्तौ च नियततरायां निराकरणप्रतिज्ञाविशेषविषयीभूत-दर्पणबर्हिर्भाविनीन्तावच्चिन्तामत्र प्रसङ्गसमायातां समापय्यात ऊर्ध्वं प्रतिज्ञानत-दाभासचूर्णनमेव वेदवेदाङ्गस्मृत्यादिमानावलीमहामहिम्नाऽनन्यथासिद्धाशयाति-शयप्रतिष्ठापनापरपर्यायेण यथावाद्विधास्यामस्तथा हि ।

अथा"थ भगवद्धर्मदीक्षाऽवश्यकत्वं न्यायानुगृहीतप्रमाणगणैर्निष्पन्नया निष्कृष्टया सरण्या प्रथमं संक्षेपतो निरूप्यत" इत्यारभ्य "नावैष्णवो वृजेन्मुक्तिं बहुशास्त्रश्रुतोऽपि वेती"त्यन्तो दुरुक्तिद्रुमो भगवद्धर्मदर्पणे चेच्छिद्यते । न हि भगवतो धर्माः स्वस्मिन्नेव पर्यवसन्नास्सन्तो दासेषु कैङ्कर्यक्रियामात्र-

(२१ प्रसङ्गादिहद ग्धतनोः कस्यचिद् भगवद्धर्मदर्पणाह्वयपुस्तविभेदेदुष्टसंस्कारविमर्दनोपक्रमः ।)

समाक्षिप्तकरणत्रयेषु दीक्षाविषयतामधिगन्तुं क्षमन्ते । दासत्वसेव्यत्वादिभेदभिन्न-व्यवस्थायास्तात्विकत्वमभिमन्यमानानां पुनस्सेव्ये हन्त भगवति निरूढास्ते ध-र्मा धर्मितामात्ममहसा न निरूपयेयुः कथञ्चिद्वा यतः । भवानत्र पृष्टो व्याचष्टा-ङ्कियद्भिर्धर्मैर्धर्मवानयम्भगवानुपसेव्यते सेवकजनैः किमिमे गुणापरपर्याया एवाभि-मन्यन्ते धर्मा आहोस्वित्तेभ्यो विभिद्यन्ते इति । यदि हि गुणानामनर्थान्तरतयैवाभि-प्रेयन्ते धर्मास्ते तदा "ब्रह्मशब्देन च स्वभावतो निरस्तनिखिलदोषोऽनवधिकातिशयासङ्ख्येयकल्याणगुणगणः पुरुषोत्तमोऽभिधीयते" इति श्रीभाष्योक्त्या पुरुषोत्तमानर्थान्तरभूते भ-

(२२ श्रीभाष्यस्थरामानुजोक्त्यादर्पणकृत्प्रतिज्ञायावैकल्यावेदनम् ।)

गवति वासुदेवे यथोदितासङ्ख्येयकल्याणगुणगणताया गृहीतत्वेन समस्तानामपि गुणनामान्तरभूतधर्माणान्तेषामवश्यमेव दीक्षाधरत्वापत्तिः परिप्राप्ता स्यात् ।

यदि पुनः कतिपयधर्मदीक्षाधरत्वमेव तद्धर्मानन्त्यप्रयुक्तदौर्लभ्याभिगामितद्धारणव्यापारपर्यालोचनया युज्यत इति ब्रूषे तदाऽपि 'भगवद्धर्मदीक्षाऽवश्यकत्वमि'ति सङ्कोचाविषयधर्माभिधायिपदविभेदप्रयोगस्सङ्कुचितपञ्चसंस्काराभिप्रायकतया कृ-

२३ भगवल्लाञ्छनधारणेनिरूपितयुक्तीनां निरसनम् ।

तोऽत्र व्यवस्थितेतर एवापद्यते । यदपि "स्वामिभृत्यभावस्थले चावश्यकं दासत्वावगमकं स्वाम्यसाधारणचिन्हधारणन्दासानां लोके राजभृत्यानान्तत्तद्राजासाधारणचिन्हधारणमिति" दृष्टान्तबललभ्याङ्कनकर्तव्यतोच्यते तदपि दृष्टान्तदार्ष्टान्तिकवैषम्योपनीतवैकल्यव्यक्तीकारप्रयोजनायैव भवतीत्युपपद्यते । न हि नराधिपे समवक्लप्तासाधारणचिन्हानि श्वेतच्छत्रवालव्यजनादीनि भृत्यजनैः प्रभ्वादेशेनात्मेच्छया वा कुहस्विद्धार्यन्ते । न वा तानि साहसमात्रेण धारयमाणा न्यक्कारद्वारकप्रशासनैककर्मणः प्रभुकृतात्प्रमुच्येरन्नवगतौ सत्याम् । ये तु प्रान्ताद्यधीशतापुरोगमाह्य धिकारविभेदा अवस्थाप्यन्ते शिष्टविशिष्टमानवविशेषेषु न ते नितरान्द्रविणादानप्रकारैकनिर्देशनास्तल्लक्षणाक्रान्तभृत्यभावानतिरेकितां मन्यन्ते तावन्निजाधिकारिताम् । ये च पुनर्निहीनाधिकारिलक्षणदौवारिकादिकाः प्रख्यायन्ते स्वैः स्वैरसाधारणसायकमुखैरनुगतरविकैस्ते च सङ्कीर्तिताधिकारिकच्छानुकच्छाभरा अध्यक्षमीक्ष्यन्त एवेति व्यक्तमेव वैषम्यं दृष्टान्तदार्ष्टान्तिकयोः । न चैते विष्णोर्दासा इति ज्ञानज्ञा-

२४ तप्ताङ्कनविडम्बनावर्णनम् ।

पनादिव्यवहरणाय वेयं विज्ञापितमुद्रा धारिता वरीवर्ति वैष्णवानां नोदेवतान्तरोपासकस्वरूपव्यावर्तनार्थमिति युक्तमनभिज्ञान्व्यामोहयितुम् । चेदेवमप्राज्ञमानवव्यामोहनौपयिकप्रकृतिकस्य खल्वङ्कनादिचेष्टितस्य वस्तुवृत्ताय फलाय वाऽनभिप्रेयमाणस्यानुभाषितव्यावर्तनप्रत्ययोत्कर्षप्रयोजनानुद्दिष्टस्य विडम्बनाप्राग्भारभागित्वे यथोपदर्शितात्ममाहात्म्यस्य विष्णोरुपास्तिनामप्रग्रहणमात्रालङ्कारस्य चाकिञ्चित्करतरत्वात् । न चाप्यसौ तप्तमुद्रा हन्त हेतिभिर्विष्णोश्चक्रशङ्खाद्याभिः सम्बध्यते सर्वश इति भ्रमितव्यम् । कल्यापि तासामन्यतमायाः सम्बन्धासम्भवात्कथञ्चिद्वा । न ह्येकैकशश्चक्रादीनां स्वरूपसत्तासमीक्षयाऽलौकिकाकृतिस्वात्मौन्नत्यनिरूपितविशिष्टवीर्यवत्तायास्तावद्देवताभावसम्भावितायाः पुरोभागे चर्चा वा चक्राङ्कनादेस्सम्बन्धाद्बादरायणीयादतिशेते । सम्बन्धान्तरस्यात्यन्ताप्रवृत्तेः । क्व वा भगवद्देहदेदीप्यमानास्सुदर्शनादयः कार्तवीर्याद्यवतारभावमापन्नाः क्व वा पुनस्तदभिख्यया व्यवह्रीयमाणश्चापणे

काकिणिकातुच्छैर्विक्रीयमाणा एव लोहाकारादिभिस्तप्ताङ्कनासम्भारा यथेष्टं य-खल्वमी शिल्पिभिः परिकल्प्यमाना भित्यादौ व्याघ्रविग्रहाः । व्याघ्रादयस्त्वहथान्यहनि मृगयाबद्भिरितरैर्वा दर्शनकांक्षिभिस्साक्षात्क्रियमाणतया कुड्यादौ चित्रचन्त इति नास्ति किञ्चिच्चित्रम् । विस्मयातिशयभूमयो नाम यथाभूतलोहव्यक्तयो निजाङ्गेष्वङ्कनकरणा भवन्त्यो वा भवन्त्येव भित्तिप्रतिमानिरूपकरङ्गलेखनिकादिसमानात्मानोऽस्मदिष्टप्रसाधनाप्रभविष्णवश्चेति तासाम्प्रतिरूपभूतास्त्वग्गतव्रणादिलाञ्छनप्रभेदा इव बाह्वादावङ्कनाऽऽकृतयस्ताभ्योऽपि हीयन्त इति च सर्वेषामनुभवविषयोयमाविद्यते । इतोऽपि परन्दुर्दशाविशेषोर्देहैकभागो दन्दह्यते बाह्वादेरुक्ताभिर्लोहव्यक्तिभिर्विनैव व्याधिप्रसक्तिमात्मघाताभेकापराधाभिधानश्च धीपूर्वकमिति । शासनञ्चोग्रमेवैवमात्मकस्य कर्मण "स्तप्तमुद्रा परा ये तु योषारूपविधारिणः । जीविकार्थन्नर्तनादेः कारिणो दण्डभागिनः ॥ दण्डा ह्येते कर्मदण्डो धिग्दण्डोऽथ बहिष्कृतिः । दण्डः क्रमेण संयोज्यो नृपैराचार्यपूरुषै"रित्याश्वलायनस्मृत्या विधीयमानमधिगम्यते । ननु "दक्षिणे तु भुजे चक्रं वामांसे शङ्खमेव च । गदांच भालमध्ये तु हृदये नन्दकं तथा ॥ मस्तके तु तथा शार्ङ्गमङ्कयेद्विमलं तथा । तापसंस्कारमात्रेण परां सिद्धिमवाप्नुयादिति" हारीतस्मरणादङ्कितगात्राणाम्परपुरुषार्थमाङ्गल्ययोगित्वे कथमेता उपन्यस्तदण्डादिवाचो वो विद्वेषकलुषास्सम्पद्येरन् । नैष दोषः । स्मृत्यन्तरसंवादविधुरहारीतवचनानां क्षेपकताप्रयुक्तानुपादेयत्वलक्षणाप्रामाण्यशङ्काबाहुल्यकवलितत्वादुक्तगत्येति कुतोऽत्र प्रत्याशा सिद्धेः पुनः परायाः । वस्तुतस्तु अङ्कनमत्र भगवदायुधधीगोचरछलिकोक्तिभिर्विभाव्यमानमनङ्कनार्हसुदर्शनादिपरिधिप्रतीतिस्वभावपर्यवेक्षया भगवद्भिन्नव्यक्तिमात्रे कल्पान्तेऽप्यसङ्गततमतया नार्हत्येवात्मलाभं कदाचिद्वा कथञ्चित्कुत्रचिच्च । तानिस्त्वायुधानि चक्रायुधादनन्यगामीन्येव । स्वतो व्यावृत्तात्मकत्वात् । जगदपायनिर्हारहेतवे धृतानि तानि चक्रादीनि तदवस्थानस्थायीन्येव सार्वदिकान्युपपद्यन्ते । तत्पत्नीपुत्रलोकादीन्यपि लक्ष्मीमनोभववैकुण्ठादीनि तत्तासमानयोगीन्येव । किञ्च "यदम्बुवैष्णवः कायस्ततो विप्रवसुन्धरा । पद्माकारा समुद्भूता पर्वताब्ध्यादिसंयुते" त्यम्बुनो विष्णोः शरीरत्वेनाम्बुपरिणामभूतं ब्रह्माण्डमपि विष्णोः कायस्तस्य च विष्णुरात्मेति सकलश्रुतिगततादात्म्योपदेशोपबृंहणरूपस्य सामानाधिकरण्यस्य 'ज्योतींषिविष्णुरि'त्यारम्य वक्ष्यमाणस्य शरीरात्मभाव एव निबन्धनम् । "तानि स-

र्णाणि तद्वपुः । तत्सर्वं वै हरेस्तनुः । स एव सर्वं भूतात्मा प्रधानपुरुषात्मनः । विश्वरूपो यतोऽव्यय इति । तदिदं शरीरात्मभावायत्तं तादात्म्यं सामानाधिकरण्येन व्यपदिशति ज्योतींषि विष्णुरिति । अस्तिनास्तीति शब्दाभिधेयं चिदचिदात्मकं कृत्स्नं जगत्परमस्य परेशस्य परस्य ब्रह्मणो विष्णोः कायत्वेन तदात्मकमित्यादिना श्रीभाष्ये जिज्ञासाऽधिकरणगाभिर्गीर्भिर्विष्णोः स्वाम्युपगमविधाविशेषसन्निधापितस्य ब्रह्माण्डान्तर्वर्तिवस्तुकात्स्न्यवपुरात्मन इतरेतरतनुतादात्म्याभिभाषाविभूषितस्यात्मयाथात्म्यपरिचिन्तयाऽलीकाङ्कनावेशविशेषवर्जमानियत्ताकस्वरूपोपास्त्यैव स्वार्थसमर्थनतृप्त्यप्राप्तौ तदात्मभूतसकलार्थसन्निवेशाङ्कनप्रक्रियायाः परिपाल्यत्वापत्तिः । अनभिनिवेशासामर्थ्ये चेद्भवेतान्तत्र तदा विष्णोर्वा भगवत उपास्यस्याप्रणखादाचचूडान्तात्प्रत्यङ्गतप्ताङ्कनक्रियाया अभ्यर्हिततया तदङ्कनेनात्मदेहस्य प्रत्यंशन्तापयितत्वापत्तेर्युक्ततरत्वे रमाया अप्यङ्कनस्य वामपर्यङ्कपीठाभिरामायास्तद्वदेव युक्ततमत्वप्रसक्तिः । पद्मालयातत्पत्योर्जगतो जननीजनकत्वेनाभिमन्यमानयोर्वैशिष्ट्यप्रजननावयवमुद्रायाः । प्रजापरिरमणवासनाजालसञ्चालनार्हायास्ततोऽप्यतिशयितपुरुषार्थसम्भावनाभावुकतासमादरश्च । यदीदं परिहसोक्तिमयन्त्वेनमन्यसे वदन्नो नूनं तर्हि त्वदभिमतायास्तप्तमुद्रावातुलक्रियायास्तस्मादप्युत्तुङ्गवाङ्मनःकायसङ्क्लेदिप्रचाराधीनप्रहासप्रहारादिदुर्दैवदूषिततया विरामं तस्यास्सर्वशः श्रेयोवहं सुमत्या कुतो न सम्भजेर्दौरात्म्यभञ्जनेनात्मनः।

२५ पुनरपिश्रीभाष्यवचनोदाहरणे न पुनरेदेवविडम्वना प्रदर्शनम् ।

ननु चाङ्कितगात्रा भगवत्करुणापात्रमभूवन्निति मोचनमेतस्मादनुचितमेव । मैवम् । विष्णोः कारुण्यसम्पत्तिसम्पादने तप्ताङ्कनादेरप्रयोजकत्वात् । न हि प्रह्लादगजेन्द्रविभीषणपाञ्चालीध्रुवपुरोगमानामाकस्मिकोग्रतरविपज्जलधिनिमज्जानान्यथावद्ध्यानोदयाव्यवहितोत्तरक्षणएवापाद्विमोक्षणसमारम्भसन्नद्धचेताः परमकारुणिको भगवानुमारमारमणाविरूपप्रपत्तिलक्षणोपास्त्यादिमन्महास्मार्तानेव तप्तमुद्रादिलाञ्छनानाममात्राकर्णनानुभाव्यजुगुप्सापरामृष्टाँश्च नोद्धारयाम्बभूवेत्यधिगम्यते स्वप्रकरणचम्भण्यमानाद्वा वचनात्कस्माच्चित् । नासीदेव काले तस्मिन्नुन्मार्गप्रवृत्तिरेवंरूपा यथेष्टचेष्टाकमानवबहुलकालावयव इवार्वाचीने । न ह्येवंविधास्त्वस्थिस्नायुमज्जारुधिरपलचर्मात्मकेदेहादावनात्मनि निरहङ्कारास्साहङ्का-

२६ पुनरपिरूपान्तरेण तप्ताङ्कनविडम्वना ।

रप्रवृत्तिप्रभृतितापनादिपामरव्यापारान्विदध्युः प्रोत्साहसहस्रैर्वाऽमत्सरपुरस्सराः । य-

२७ तप्ताङ्कनादिदुश्चेष्टावन्मतविभेदा आधुनिका एवेत्यनुकूलतर्कवलात्सोदाहरणमुपवर्णनम् ।

द्यधुनातना इव पुरातना अपि तप्ताङ्कनाद्याचरणविशेषविषयदु-
राग्रहग्राहगृहीता अभविष्यन्तदा शिवशक्त्यादिदेवतान्तरोपा-
सनासम्भारभूतमन्दिरादिनिर्माणतदवच्छिन्ननैवेद्याद्यर्चनौपयिकभूपा-
लपुरस्सरप्रचालितताम्रफलकप्रमुखागमप्रशासनप्रवर्तनानुकूलानुभू-
तेरद्यावध्यविप्रतिपन्नाया विप्लवविशेष आदित एवाभविष्यत् । नाभूद्यचसौ न भ-
वत्येव वा साम्प्रतम् । हरिहिरण्यगर्भसनकेन्द्रकपिलगौतमवसिष्ठपराशरव्यासद्रो-
णाश्वत्थामोपमन्युशुकाचार्यादिभिर्ब्रह्मर्षिभिरिक्ष्वाकुसहस्रबाहुपृथुहरिश्चन्द्ररघुरामच-
न्द्रजनकभगीरथभीष्मपाण्डवविक्रमार्कभोजादिपर्यन्तैस्तावद्राजर्षिपरम्पराकैर्जान्हवीतरु-
णतनयासरस्वतीनर्मदागौतम्यादिमहानदीनां बहुलतरतटस्थलीषु हिमाचलविन्ध्याचल-
कूर्माचलार्बुदाचलरैवताचलादिभेदभिन्नपर्वतगुहासु मानसबिन्दुादावश्रितततरसरत्सान्निधा-
नेषु स्वेन स्वेन हि नाम्ना प्रतिष्ठापितपरब्रह्मलिङ्गानि कपिलेश्वरगौतमेश्वरभृग्वेश्वरवसिष्ठे-
श्वरव्यासेश्वरशुकेश्वरपरशुरामेश्वरवामनेश्वरद्रोणेश्वराश्वत्थामेश्वरेक्ष्वाकेश्वरहरिश्चन्द्रे-
श्वरसगरेश्वररामेश्वरकृष्णेश्वरार्जुनेश्वरभीमेश्वरविक्रमेश्वरभोजेश्वरप्रमुखाभिख्यावि-
ख्यातानीतिहासाद्यतीतानन्तरप्रबन्धप्रतिपद्यमानानि च शिष्टविशिष्टव्यवहारप्रणालीप-
रिनिष्ठितसंस्थाकान्याराध्यन्ते चातुर्वर्ण्येन च चातुराश्रम्येण । यदि चेद्रामानुजाद्यभ्यू-
हितवैष्णववर्त्मानस्सदातनाः स्युस्तदा शिवशक्तिगणपत्यादियथोदितदेवालयस्तदर्चाश्च
प्रवृत्ता एव जगत्यां सुतरां न स्युः प्रवृत्ता अपि वा सद्य एवोत्सादितसंस्थाना-
स्सत्यस्समयान्तरे व्यपेतनामधेयसामान्यप्रत्यया अलोकव्यवहारगोचरा एव पर्य-
वस्येरन् । धरित्रीतलञ्चेदमुन्मार्गाचारनीराधिनिमग्नं सदपुरुषार्थप्रस्थानभावनापरा-
हततरमेव तद्वदनर्थकल्लोलिनीमृच्छेदिति कृत्वा महेशाद्युपासनापराग्वदनताप-
पुण्ड्रादिचेष्टिताविष्करणलक्षणःपन्थाःखल्वसौ पुरासमये नासाञ्चक्रे । ननु शैवा-
दिसम्प्रदायास्तित्वसमानप्रत्यासत्तिकस्सम्प्रदायोऽयं वैष्णवानामुदितनिन्दागरल-
ज्वालादर्वीयानेव । नैवम् । शैववैष्णवादिसम्प्रदायप्रवृत्तेर्वाङ्मतिचोदितसा-
ङ्केतिकावग्रहायाः श्रौतस्मार्ताद्यनाधुनिकघण्ठापथाधिक्रियाकस्तात्वायातयातादि-
प्रयासाप्रत्यनीकपदाधिरोहयोग्यत्वे तत्प्रतियोगिककाटवगुणवत्तायास्थूत्करणप्रक्रम-
मात्रभूमित्वे नानूदितनिन्दाकन्दलिततुन्दनदशायास्तुन्दिलोदरनन्दनाभिवादबद्धादरे-
ष्वनन्यायय्यत्वात् । नारायणादीनामुपासनाकर्मीभूतानामनितरेतरदेवतापरीवादप्र-

भवप्रसादात्मनामन्तरात्मस्वरूपापत्तिसमावरकप्रकृतान्तरायप्रत्यवायापनोदनमूलीभूतात्मभावानां पुरोभागे नन्वात्मसम्प्रदायातिरेकिसम्प्रदायास्तिताया एवासिद्ध्या तद्विपर्ययप्रतीतिमन्मतापरपर्यायसम्प्रदायकथाया भिदावदानान्तावन्मतिमात्रविलसितायां आम्नायसर्वस्वसर्वतन्त्रराद्धान्तसुदूरपराहतत्वाच्च ।

२८ श्रीभाष्यश्रुतप्रकाशिकाकाराभ्यां विष्णावेव हरशिवेशानादिशब्दानां कृतायाः किल समन्वयादिचेष्टायास्तिरस्कारः ।

नन्वेवमपि श्रीभाष्ये तावत्समन्वयाधिकरणे " सदेव सोम्ये " त्यारभ्य " एको ह वै नारायण आसीदि " त्यन्तं सत्तद्ब्रह्मात्मादिशब्दानां परमकारणभूते विष्णावेव समन्वयस्य सम्पादिततया तद्व्याख्यानभूततत्रत्यश्रुतप्रकाशिकानिरूपणमहिम्ना च हरशिवेशानादिशब्दानामपि तत्रैव पर्यवसानं गम्यमानं विष्णोरेव सम्प्रदायं श्रौतत्वेन प्रब्रूते । मैवम् । शब्दशक्तिस्वभावविभेदाधीनबुभुत्साप्रेर्यमाणमतिमतान्दृष्टावन्यथासिद्धतामनपहायानन्यथासिद्धतात्पर्यगोचरताया विवादाध्यासिताया एव सम्प्रतीयमानत्वात् । " विष्णोर्व्याप्तिकर्मण " इति नैरुक्तोक्त्या दिग्देशाद्यनवच्छिन्ने चिदात्मन्येवानामरूपे रमारमणत्वाद्यशेषधर्मातीते च निरस्तसमस्तप्रपञ्चे विष्णुपदस्यानन्यथासिद्धवृत्तिज्योतिषो बभ्राजमानत्वेन तन्मतव्यूहितदेवताया अशास्त्रीयविधाविशेषवञ्चिताया आत्मनः परमार्थभूतदशाविशालसम्पदेव निराबाधं विराजते व्यपेतसम्प्रदायाद्युपद्रवजाता । न च नारायणोपनिषदि " नारायणपरं ब्रह्म तत्त्वं नारायणः पर " इत्येवंविधवचनानि तु नारायणमेव विष्णोरनन्यवाचकशब्दाभिधेयभूतमैकान्तिकभावेन प्रतिष्ठापयन्तीति वाच्यम् । उपक्रमपरामर्शोपसंहारादीनान्तात्पर्यसमर्पणसमर्थत्वे उपक्रमे तावदुपनिषदो ऽम्भस्यपारे भुवनस्य मध्ये नाकस्य पृष्ठे महतो महीयानि " ति ऋगेषा गम्यमाना " परीत्य लोकान्परीत्य भूतानि परीत्य सर्वाः प्रदिशो दिशश्चे " त्याद्याभिर्ऋग्भिस्समनुवाकावसानशालिनीभिरैकवाक्यतामुपयन्ती यथोदितदुश्शङ्कापरम्परामपहन्ती पुनरपाक्षिकीन्नाम चित्सत्तां तामुदीरितलक्षणलक्षितामेव प्रोद्बोधयन्ती शरणीकरणीया एव युष्माकं यतः । मध्ये पुनरुपनिषदो " नमो हिरण्यबाहव " इत्यारभ्य " आम्बिकापतय उमापतये पशुपतये नमो नम " इत्यन्तं " यो वेदादौ स्वरः प्रोक्त " इति प्रस्तुत्य " यः परस्स महेश्वर " इति पर्यन्तं " विश्वं भूतं भुवनमिति " प्रक्रम्य " सर्वो ह्येष रुद्रस्तस्मै रुद्राय नमो ऽस्तु पुरुषो वै रुद्र " इत्यन्तञ्च मन्त्रजातं महेश्वरमेवैककण्ठ्येनाभिदधत्प्र-

तिवध्नात्येति विष्णुतत्त्वं त्वदभिप्रेतम् । या ऽपि गायत्री विष्णोस्तस्यामेवोपनिपादि "नारायणाय विद्महे" इत्येवंरूपा "आपो नारा इति प्रोक्ता" इति मनोर्निर्वचनानुगृहीता च साऽपि सोपाधिकमेव जलाधिशायिनं विपक्षायितदेवतान्तरमाहिमानं निवेदयन्ती "तत्पुरुषाय विद्महे । तत्पुरुषस्य विद्म" इत्याभ्यां सत्रा गायत्रीभ्यां वै वैभ्रात्रमनुकूलयन्ती च तदाशापिशाचीं नाम नाशयत्येवातितरामिति का वा तत्र प्रत्याशा स्वाभ्युपेतनारायणस्य वादावाप्तेः । एवञ्च नारायणशब्दस्यासाधारण्येन न गरुडध्वजोपाधौ तात्पर्यं अपि तु साधारण्येन परब्रह्ममात्रोपलक्षकत्वमिति प्रवृत्तिस्वारस्यादवधार्यते । "सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति। यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं सङ्ग्रहेण ब्रवीम्योमित्येत"दिति कठश्रुतिः परापरब्रह्मदृष्ट्या ह्युपास्यमानमोङ्कारमेव निरवशेषवेदतपआद्यसङ्कीर्णसाधकतमसम्पादनीयपदानन्यभावेन स्तुवाना तस्यैव शश्वदक्षरतया ब्रह्मतया च पुनः परतया निर्देशातिशयं विधत्ते । माण्डूक्ये ताव "दोमित्येतदक्षरमिदं सर्वं तस्योपव्याख्यानं भूतं भवद्भविष्यदिति सर्वमोङ्कार एवे" त्यारभ्य "एकात्मप्रत्ययसारं प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेय" इत्यन्तया परं वाचां सन्तत्या निरुपाधिकमेव ब्रह्माद्वैतात्मभूतं शिवपदलक्ष्यार्थपरपर्यायञ्च पदन्तावत्तदेव नारायणवासुदेवादिविरूपप्रवृत्तिनिमित्तभूतपदकदम्बागम्यं सङ्कीर्त्यते समस्तेतरवेद्यार्थबाधावधिभूतं प्रतिविद्यं भिद्यमानमिवाधिगम्यमानमपि । वासुदेवहयग्रीवाद्युपनिषत्सु तदादिशब्दोपलब्धिसम्भवेऽपीशादिदशोपनिषत्स्वप्रतीतिरेव तेषामुपसर्जनभावस्याप्यनवगाहिनी ह्यनुवर्तते । इतिहासपुराणादीनामप्येषैव सरणिरुपक्रमादिगमकैरुत्सर्पत्युदयानुमोदाय प्रतिपत्तॄणाम् । गतिर्हि मन्त्रब्राह्मणयोरुज्जीव्या पुनरेतस्याः प्रागेवावेदिता साररूपेण । अत्रार्थे प्रश्ननिरूपणयोर्गतिमत्ताऽपि प्रग्राहितप्राया । एवं निश्शङ्केऽपि वस्तुन्यमुष्मिन्प्रज्ञामात्मनः प्रवर्तयता रामानुजेन श्रीमता विहिताँश्च तत्र वादार्थान्प्रसङ्गसङ्गत्यैवोपरिष्टान्निषेत्स्यामः श्रीभाष्ये सङ्ग्रथितान् । अथात्र प्रकृतमेव दर्पणनिराकरणप्रकरणमनुसरामो यथोदाहृततप्ताङ्कनादयो वादिना भगवद्धर्मत्वेनाभिमता अप्यभगवद्धर्मा एव तत्वतो भवन्तीत्येतावता कृतनिरूपणेन ग्रन्थेन निश्चययोग्यं वस्त्ववसीयताम् । वस्तुतस्तु जगज्जननादयस्सत्यज्ञानानन्दादयश्च भवन्ति हि भगवतो धर्मा निरूढास्ते च देहाभिमानवशंवदव्यापारव्यापृतैः कल्पान्ते वा भेदादिधीग्राहगृहीतात्मभिरप्राप्या एव भवेयुः ।

तेषामेव तु दीक्षाधारणमिच्छमानास्सर्वे सूरयो यथावस्थितोपेयजातमाजुषन्नाश्चरितार्थाः श्रूयन्ते च स्मर्यन्ते पुनः कुहस्विदालक्ष्यन्ते । ये हि प्रतिपन्तॄणामप्रत्यक्षाद्युपनतास्तेभ्य एव धर्मेभ्यस्स्पृहयन्तोऽलौकिकेभ्यो ज्ञायन्ते विज्ञातारो न तु जातु पामरजनपर्यन्तप्रतीतियोग्यप्रत्यक्षाद्यवगम्यमानत्रपुरादिविक्रियाविशेषेभ्यो यथाभावितमुद्राद्यपरपर्यायेभ्यः । एवञ्च निर्वर्णितभगवद्धर्मसौरभ्यदूरेभ्यस्तदावश्यकत्वकथायाः का वा प्रत्योशेति स्थितम् । एतेन तप्ताङ्कनादिचेष्टासिद्धये गृहीता हि प्रमाणगणाः प्रमाणाभासा एव सन्तस्तदनुग्राहकन्यायाः अपि तथाविधा एवोपनमन्ते । तद्विषया च सरणिरुत्सरणिमात्रसम्पादिकेति फलितम् । "सोऽध्वनः पारमाप्नोती"त्याद्युपन्यस्तश्रुतिघटकविष्णुपरमादिपदविशेषा ह्युक्तरीत्या त्वपमृदिताशेषविशेषे ब्रह्मण्येवान्वययोग्या न तु तदभिप्रेते विशिष्य विष्णोपाधाविति निरूपित एवार्थस्सर्वतन्त्रसिद्धान्तपरिनिष्पन्नो न प्रस्मर्तव्यः । विष्णोस्त्वस्मिन्निर्वर्णितस्य मुक्तिपदात्मकत्वेन तत्स्वामिता तस्मिन्नुपपद्यते त्वद्व्यूहव्यञ्जिता । न हि विष्णोरेवोपासना स्वातन्त्र्येण मुक्तावुत्कृष्टायां साधनभावायालन्निगमागमनिर्धारिता । अपर्याप्तोपायभावभावितत्वादेव तस्याः । यथा चाम्नायते । "श्रद्धाभक्तिध्यानयोगादवेही" त्युपनिषदि कैवल्यनाम्न्याम् । आम्नानमेत "दश्रद्धा परमः पाप्मा श्रद्धा हि परमं तपः । मनसश्चेन्द्रियाणां च ह्यैकाग्र्यं परमं तपः । स्वस्वरूपानुसन्धानं भक्तिरित्यभिधीयते । वृत्तिहीनं मनः कृत्वा क्षेत्रज्ञं परमात्मनि । एकीकृत्य विमुच्येत योगोऽयं मुख्य उच्यत,, इत्येवञ्जातीयेभ्यः स्मरणेभ्यो बौधायनयाज्ञवल्क्यदक्षाश्वलायनीयेभ्यः प्रतिष्ठिततरपदार्थनिर्वचनबललभ्यसमुदितश्रद्धादिशब्दार्थत्रितयपर्याप्तधर्मावच्छेदेनैव प्रातिस्विकस्वरूपापन्नकृतकृत्यताविशेषोपलक्षितेन मुक्तिङ्किल कैवल्यम्प्रतिपादयदर्थान्तरं निराचक्षाणञ्चाधिगम्यते ।

२८ प्रसङ्गादत्र श्रीभाष्ययावत्तात्पर्यसंग्राहकतत्रत्यमङ्गलाचरणश्लोकार्थनिवर्हणम्।

ननु श्रीभाष्ये "अखिलभुवनजन्मस्थेमभङ्गादिलीले विनतविविधभूतव्रातरक्षैकदीक्षे श्रुतिशिरसि विदीप्ते ब्रह्मणि श्रीनिवासे भवतु मम परस्मिन्शेमुषीभक्तिरूपे,, ति भाष्यार्थसङ्ग्राहकपद्यमध्य 'चञ्चच्छेमुषीभक्तिरूपे' ति गिरा परं परार्थमधुरिमामात्रप्रसवित्र्या भक्तेरेवोपासनाऽनर्थान्तरभूताया मुक्तिम्प्रति हेतुभावस्य प्रज्ञापितत्वादनुपपन्नोऽयमाम्नायार्थोपन्यास इति चेद्बाढमेवन्तथापि भक्तेः श्रुतितात्पर्यविशेषविषयायाः कर्मज्ञानकाण्डयोरन्तराले वर्तमानाया ज्ञानस्वरूपसंसिद्धिहेतुभूतसामग्रीशब्दा-

र्थान्यतमभावविभावितायाश्चात्मप्रसूतिप्रयुक्तसार्वत्रिकसौमनस्यमाङ्गल्यैकसंसाधिकायाः श्रीभाष्यकृता त्वत्यन्तानिरूपणात् । न हि तस्या ज्ञाता एव सन्तन्निरूपणे भवेत्कश्चित्कृतानादरो विचारणायाम् । भक्तेस्तु तादृग्रूपा या विज्ञायैवाप्रमाणभावं न न्यरूपयत्तामेतामिति चेन्न । अज्ञात्वैव ज्ञात्वा वा तान्दुराग्रहगृहीतहृदयतया तेन न न्यरूपीति निश्चयम्प्रत्यपनायककारणाभावात् । एवमात्मकता तस्या अप्रामाणिकीति कृत्वैवोपेक्षितन्निरूपणमिति पुनस्साहसमात्रेणोच्येत यथोक्तमेवाज्ञानादिकन्तस्य तद्विषयङ्कुतो नानुमीयेत । अनुमीयमानं वा तदेतत्सदेवेति प्रतिपद्यमाना न भवन्त्येव हि भ्रान्ताः प्रतिपत्तारो महाभागाः । या खल्वेतेन सङ्कीर्तिता श्रीनिवासविषया भक्तिस्सा तावद्विष्णोस्सार्वात्मिकी नोपजायते । अवस्तुत्वात् । न ह्येतन्मते रामादिकमवतारभूतमन्तरावस्त्ववतारिणो विष्णोरुपासनान्तां वैदिकीं मन्त्रब्राह्मणादिप्रदेशविशेषसंसिद्धाञ्च कर्तव्यतया प्रतिपादितां वा कुर्वाणा वा तथैव तां संराधकास्सन्दृश्यन्ते । मन्त्रब्राह्मणयोर्हि विष्णुशिपिविष्टचक्रपाण्यादिभिरेव पदैस्सङ्ग्रथिता दृश्यन्ते मन्त्रविशेषा विष्णोः । ततो बाह्या एव तु ते तन्नामसधर्माणो विशिष्याऽद्रियन्ते भाष्यार्थविद्भिर्वा जाप्यवर्णाः । न ह्येष भाष्यकृ "भगवद्बोधायनकृतां विस्तीर्णां ब्रह्मसूत्रवृत्तिं पूर्वाचार्यास्सञ्चिक्षिपुस्तन्मतानुसारेण सूत्राक्षराणि व्याख्यास्यन्त" इति प्रतिज्ञायाऽप्युपदर्शितोपास्तिप्रकारं भगवता बौधायनेनोपाददे । तस्या अपि तस्यानभिप्रेतत्वात् । तदुन्नीतोपासनायान्तु विष्णोरेतदीयाराधकजाप्यवर्णसमवायघटकतया रामादिवर्णविशेषाणामत्यन्तानुपलम्भात् । यदि चेत्तद्घटिता हि मन्त्राः कर्त्तव्यत्वेनाभ्युपेतोपासनाया अवच्छेदकतां समीयुस्तर्ह्यवच्छेद्यभूतवस्तुतत्वप्रसाधनाय यतमानेन बौधायनेन भगवता कुतस्ते मन्त्रभागा नोदाहृताः स्युस्स्वकल्पादौ । कृत्वैव नोल्लिखिता इत्यादरभरः कथं स्यात्तेषु च तेषु । ननु तापिनीपुरोगमे रामादिमन्त्राणामाम्नाततया तदुपासनन्नो वैदिकमेव सन्नोक्तदुश्शङ्काकवलितं भवेदेव कथञ्चिद्वा । नैवम् । तापिन्यादेरनुवर्तनविधानव्यवस्थायास्त्वत्तोऽपि भगवतस्तस्यातिशयितानुभवविषयताया अपरिहार्यत्वापत्तेरनपन्हवार्हत्वात् । तवेव चेत्तस्यापि देवतान्तरोपासनावैमनस्यग्रहगृहीतहृदयता स्यात्तदा देवतान्तराणामादरभरैरुपासनासंस्थानस्य व्यष्ट्या वा समष्ट्या कल्पसूत्रेण धृतन्तेन कथमवकल्पतान्निजकल्पे एवोपासनाप्रस्तावे । इत्थञ्च बौधायनस्याप्यालम्बनमानालम्बनप्रायमेव भक्तिं हन्त

३० इतोपि तद्भाष्यार्थदुरूहाणामपोहनम् ।

व्याचक्षाणस्यास्य फलतीति स्थिते किम्मूलेयं भक्तिरस्येति विचिकित्सायान्निर्मूलैवेत्यापद्यते वक्ष्यमाणविधया वा ।

३१ श्रुतप्रकाशिकाव्याख्याया अप्यपाकरणमुच्छास्त्रायाः ।

यत्तु "अथोपायस्वरूपं वदति शेमुषीत्ययं सामान्यशब्दो भक्तिरूपेति विशेषशब्द,, इत्युक्तं श्रुतप्रकाशिकायां सुदर्शनसूरिणा तत्तु शेमुषीभक्तिपदयोश्चतुष्टय्या शब्दप्रवृत्या समानप्रवृत्तिनिमित्तकत्वे सति सहप्रयोगानर्हत्वलक्षणपर्यायत्वाभावे विशेष्यविशेषणभावापन्नप्रत्ययच्छायाया एवासम्पत्तावितरेतरविशेष्यभावस्यापि सुतरामयोगे अनुशासनाद्वा "बुद्धिर्मनीषा धिषणा धीः प्रज्ञाशेमुषी मति,, रित्यादे "भक्तिर्भावोऽनुरागश्च सेवाचे"त्यादेश्चेतरेतरविरुद्धार्थप्रत्यायकनामावलीसमुपवृंहिताद्वृत्तिमन्मनसः "कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एवे,, तिश्रुतिसिद्धकामादिवृत्तीनामन्योन्यविलक्षणस्वरूपविशेषशालिनीनामन्यतमात्मतामापाद्यैव कुर्वद्रूपताम्भजमानायाः खलु भक्तिनामकवृत्तेर्वृत्तिमता पुनर्मनसा भेदाभावमनङ्गीकुर्वाणयोर्भाष्यव्याख्याकृतोरनुपपन्नमेव । योऽपि तयोः पदयोस्सामान्यविशेषभाव उपदर्शितस्सोऽप्यत्रासङ्गत एव । यत्र ययोश्शब्दयोरनन्यार्थप्रत्यायनप्रयुक्तप्रवृत्तिमतोः श्रवणसमनन्तरसमये यावद्यावद्धर्मावच्छिन्नाभिधेयगोचरप्रतीतिवैरूप्यमुपजायते व्युत्पित्सूनान्तत्रैव तयोस्सामान्यविशेषभावावगमो व्युत्पत्तिसिद्धः । प्रकृते तु शेमुषीभक्तिवचसोः परस्पराकाङ्क्षानपेक्षयोः प्रधानोपसर्जनभावानवगाहिनोः प्रयोगविषयसहभावाभाववतोश्चासमानविषयविषययोर्गोमहिष्योरिव सामान्यविशेषभावप्रसक्तेरेवासम्भवात् । यदप्युक्त "मत्रापि छागो वा मन्त्रवर्णादिति न्यायोऽभिप्रेत,, इति तदप्युपक्रमे, 'पशुना यजेते' ति सन्दिग्धार्थं वाक्यं 'छागस्य वपाया मेदस' इत्यादि वाक्यशेषान्निश्चीयमानच्छागाभिन्नपशुकरणकोऽयं याग इति निर्णयविशेषविषयन्ननु पशुत्वव्याप्यधर्मावच्छिन्नच्छागैकपरतां नीयमानं सच्छागाभिन्नन्तम्पशुमेव स्वप्रवृत्तिनिमित्तभूतमभिधत्ते इह तु भक्तिश्शेमुषीव्याप्यधर्मावच्छिन्नैव स्वसजातीयकामसङ्कल्पादावतिप्रसक्तिपरिप्राप्त्यापत्या न भवतीति व्याप्यव्यापकभावावगाहिधर्मानवच्छिन्नयोस्तयोस्सामान्यविशेषभावस्सुतरामेव न प्राप्नोतीति च विषमोपन्यासकृतदूषणेन पराहण्यते तराम् । यदप्येतदुक्तं "शेमुषीशब्दोपादानेन ज्ञानकर्मसमुच्चयमतव्यावृत्तिः । भक्तिरूपेति वाक्यार्थज्ञानव्यावृत्ति,, रिति तदपि मूलाभावादभावो वन्ध्याया इव दौहित्रस्मृतिरिति न्यायमासेवमानं सत्स-

मुच्चयमतानुवर्तनाद्येवाजानानं व्यावर्तनादिकन्तस्य कथङ्कारञ्जानीयादित्युपहास-पदञ्जानीमः । वस्तुतस्तु शेमुष्यास्सदसत्साधारणविषयविशेषविषयिण्या हि त्रि-निगमनायान्दुर्विषयगोचरतापत्तेर्दुष्परिहरतया सङ्कीर्णव्युत्पादनानिबद्धायास्तस्या असङ्कीर्णसत्तावत्साधनसाध्यमहिमावाप्तियोग्यताकत्वं न स्यादेवेति समुच्चयवा-दव्यावृत्तिममेयसाक्षात्कारैकप्रसवां द्विष्याच्च सा सार्वदिकीम् । सन्ततोपचारचि-त्रितत्रार्ववसानसम्पादनानुकूलस्वान्तःप्रचारलक्षणायाः किल भक्तेर्निरूढवाक्यार्थ-धीजननतदवनाव्यतीहारप्रक्रियौपयिकसामग्रीगृहीतायाः "सा च कैवल्यमुक्तिर्ज्ञान-मात्रेणोक्ता न कर्मसाङ्ख्ययोगोपासनादिभिरित्युपनिषदिति,, मुक्तिकावाक्यकृत-निषिद्धार्थकोटिकायाश्च अखण्डार्थज्ञानप्रसूनाम्बिकाचरणकमलिनीमरन्दमाधुरीमुपसेव-मानायास्तद्व्यावृत्तिम्पूत्यप्रयोजकतमत्वे "शुद्धभावं गतो भक्त्या शास्त्राद्वेद्मि जनार्दन-म् । भक्त्या त्वनन्यया। ज्ञातुं द्रष्टुञ्च तत्वेन प्रवेष्टुमि,, त्युदाहृतवाक्यनिकरादपि ततोऽविपर्ययप्रतीतिमाक्तदेव सिद्धवदनुभाव्यते । वाचाममूषां भक्तिप्राधान्यार्थकथनं ज्ञाने वैमनस्यप्रोद्धारप्रवर्तनापरायत्तञ्चोज्झित्वा मुक्तिकावाक्यानुकूलङ्क्षिमपि ना-करोदित्यत्र दैवमेव तयोरननुकूलमित्यलं कौशलेन भक्तिव्याख्यायाः ।

अथ यदुक्तं"भक्तेरेव स्वादुतमतया प्रार्थनीयता प्रतिबन्धकपापरहितस्य शान्तपि-त्तस्य हि क्षीरे स्वादुतमताबुद्धिरि" त्यादिकन्तत्परिहर्तव्यम् । अशास्त्रीयत्वात् । न ह्येतदुद्घुष्यमाणा भक्तिर्भवत्येव भक्तिपदार्थः । तदर्थस्तूपरिष्टान्निरूपयिष्यते । इह त्विदन्निर्णीयते "न कञ्चनावमन्येत । ये च निन्दन्ति मां मूढाः शङ्करं वा नरा-धमाः । कुशलैः कृतशास्त्राणि पठित्वा ये नराधमा" इत्यादिविष्णुगौतमादिस्मृति-गर्हितविष्णूपासनायाः शम्भोराराधनवैमुख्यद्रोहवैश्वानरताण्डवाडम्बरानन्दितात्म-भिः क्रियमाणाया अप्यकृतचरत्वादप्रयोजनप्रयुक्तत्वात्तदप्रसादननिदानदौर्गत्यपा-त्रत्वाच्च । यथा चाम्नायते "अन्तरिच्छन्ति तं जने रुद्रं परो मनीषया गृह्णन्ति जिव्हया ससमिति" । अस्यायमर्थः । जनेष्वन्तर्यामिरूपेण विराजन्तं परः परं निरतिशययोग्यतावन्तं रुद्रं परमेश्वरं महादेवं ये मनीषयेच्छन्ति अकृत्रिममनोवृत्त्या ध्यायन्ति ते ससं सस्यविकारात्मकमन्नं जिह्वया गृह्णन्तीति ये पुनर्दुर्मेधसो मनसा तं नेच्छन्ति जिह्वया पुरीषमेव ते गृह्णन्तीति व्यतिरेकमुद्रया लक्ष्यार्थो-ऽवगम्यते । "अन्तरिच्छन्ति ये रुद्रं सदा वन्द्यं मनीषया । गृह्णन्ति जिह्वया ते हि रसपूर्णामृतोदकम् ॥ अन्तर्नेच्छन्ति ये रुद्रं भवानीसहितं शिवम् । पुरीषमेव

गृह्णन्ति जिह्वया ते न संशय" इत्युपबृंहितोऽयं मन्त्रो भगवता पराशरेण । महाभारते तु "धिक्तेषां धिक्तेषां धिक्तेषां जन्म धिगथ धिक्तेषां येषां न वसति हृदये कुमतिपथविमोक्षको रुद्र,, इति । उक्तञ्च व्यक्तं भागवतकौर्मादौ "कर्णौ पिधाय निरियाद्यदकल्प ईशे धर्मावितर्यसृणुभिर्नृभिरस्यमाने । छिन्द्यात्प्रसह्यरुषतीमसतां प्रभुञ्चेज्जिह्वामसूनपि ततो विसृजेत्स्वधर्मः ॥ कुर्वन्ति चावताराणि ब्राह्मणानां कुलेषु वै । दधीचिशापनिर्दग्धाः पुरा दक्षाध्वरे द्विजाः ॥ निन्दन्ति च महादेवं तमसाविष्टचेतसः । यस्सर्वभूतविनुतं विश्वेशं तु विनिन्दति । न तस्य निष्कृतिश्शक्या कर्तुं वर्षशतैरपि ॥ शिवनिन्दापरं मूर्खं यदि शासितुमक्षमः । स्वकर्णौ लोदयेत्तोत्रैरिति शास्त्रस्य निश्चय,, इत्यादि । एवञ्चैवंरूपदोषाच्छन्नभक्तेरत्र स्वादुतैव दूरङ्गतेति तत्तमताकथायाः को वाऽवकाशः । प्रार्थनम्पुनरेतस्याः किं फलजननम् । भक्त्या चैवंरूपया "एवमुक्ता तु विप्रर्षिश्शशापेश्वर विद्विषः । समागतान्ब्राह्मणांश्च दक्षसाहाय्यकारिणः ॥ यस्माद्बहिष्कृता वेदा भवद्भिः परमेश्वरः । विनिन्दितो महादेवः शङ्करो लोकवन्दितः ॥ भविष्यध्वं त्रयीबाह्यास्सर्वेपीश्वरविद्विषः । निन्दन्तो ह्यैश्वरं मार्गं कुशास्त्रासक्तमानसाः ॥ मिथ्याधीतसमाचारास्सदा मिथ्याभिमानिनः । प्राप्य घोरं कलियुगं कलहैः परिपीडिताः ॥ त्यक्त्वा तपोवनं कृत्स्नं गच्छध्वं नरकान्पुनः । भविष्यति हृषीकेशश्चाश्रितोऽपि पराङ्मुखः ॥ पुरुषोत्तममाश्रित्य शिवनिन्दापरा द्विजाः । कलौ युगे भविष्यन्ति त्राता तेषां न माधव,, इत्यादिकौर्मसौरादिवचोराशिभिः शापजन्मसम्प्रयुक्तशिवद्वेषादिवेदबाह्यकुत्सिताचारशालिनाममाधवकृपापात्रतैवावधारिता भवत्यत्युच्चैः । ननु च भोरादेहावसानसमयमस्माभिरुपास्यमानो भक्तवत्सलोऽपि सँश्च भगवान्स्यान्नः कथं न त्रातेति चेत्स्याद्वा कथं वस्त्रातेति चिन्तयध्वम् । भक्तेर्यौष्माकीनाया अभक्तिसमानाकारत्वादित्युक्तोत्तरत्वादत्र पुनस्तदर्थपरिशुद्धये श्रीभाष्ये "ध्यानञ्च तैलधारावदविच्छिन्नस्मृतिसन्तानरूपा ध्रुवा स्मृतिः । ध्रुवायाः स्मृतेरपवर्गोपायत्वश्रवणात् । सा च स्मृतिर्दर्शनसमानाकारा । भवति च स्मृतेर्भावना प्रकर्षाद्दर्शनरूपता । दर्शनरूपता च प्रत्यक्षतापत्तिः । अतस्साक्षात्काररूपा स्मृतिः स्मर्यमाणात्यर्थप्रियत्वेन स्वयमप्यत्यर्थप्रिया यस्य स एव परमात्मना वरणीयो भवतीति तेनैव लभ्यते परमात्मेत्युक्तं भवति एवं रूपा ध्रुवानुस्मृतिरेव भक्ति-

३२ श्रीभाष्येक्तस्य हि ध्यानपदार्थनिर्वचनस्य श्रुत्यादिनिरूढप्रमाणबाध्यतया नितरामत्रन्यक्कारः ।

शब्देनाभिधीयते । उपासनपर्यायत्वाद्भक्तिशब्दस्ये,, त्येवंविधा वाचो जिज्ञासाधिकरणगा उदाहृत्य प्रत्याख्यायन्ते तथा हि । यद्यप्यत्र ध्यानस्य तैलधारागतधर्मौपम्यमुपादाय स्मृतिसन्तानरूपता सिद्धवत्कृत्योपवर्णिता तथापि निरुक्तिरेषा स्वच्छन्दप्रवृत्तिप्रयुक्तैवापद्यते । निर्वचनाविषयीभूतध्यानपदस्यैवात्राप्रकृतत्वात् । तुष्यतु नयेनाभ्युपेतस्य वा तस्यासङ्गततरतैव । "तत्र प्रत्ययैकतानता ध्यानमि,, त्येवासूत्रयत्पतञ्जलिर्भगवान् । तच्च ध्यानं विजातीयप्रत्ययप्रवाहानन्तरितसजातीयप्रत्ययप्रवाहानुवृत्तिरूपमेव । तस्य चात्यन्तिकसाधनभूतसमाधिना "वृत्तिहीनं मनः कृत्वा क्षेत्रज्ञं परमात्मनि । एकीकृत्य विमुच्येत योगोऽयं मुख्य उच्यत,, इति दक्षस्मृत्या सिद्धान्तितब्रह्मात्मैकत्वप्रतिपत्तिप्रयोजकेनान्यथासिद्धत्वप्रायिकत्वात्समाधिम्प्रतिसाक्षात्कारणताया नियतत्वेऽप्यपवर्गम्प्रति तदसिध्या तदात्मिकायाः स्मृतेरपवर्गोपायत्वकीर्तनमयुक्तमेव । विवृतश्चेदं सूत्रं "तस्मिन्देशे ध्येयालम्बनस्य प्रत्ययस्य एकतानता सदृशः प्रवाहः प्रत्ययान्तरेणापरामृष्टो ध्यानमि,, तिभगवता वेदव्यासेन । नेह कश्चित्स्मृतिसन्तानादिशब्दबन्धो दृश्यते सारस्येन । नापि गम्यविधानविधया शाब्दार्थप्रकृतिकया । न वा पुनर्भङ्ग्यन्तरेण सूत्रभाष्याक्षरयोरभ्यर्हितभावोपगूहनेन । किन्तर्हि तदुभयाक्षरसिद्धार्थतिरस्कार्यएवायमर्थो ध्यानञ्चेत्यादिपदावगाहितोऽवगम्यते । अर्थे पुनरस्मद्वर्णिते तु "तद्रूपं प्रत्ययैकाग्रसन्ततिश्चान्यनिःस्पृहा । तद्ध्यानं प्रथमैरङ्गैः षड्भिर्निष्पद्यते नृपेत्य,, नुसहायीभूतं वचनं विष्णुपुराणस्थमितराणि चैवञ्जातीयकानि सहस्रश उपक्रम्यन्ते । एवं ध्यानानन्तरसाध्यसमाधिसूत्रं ननु "तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिरि,, तीदं व्याख्यायाऽथ "तस्य भूमिषु विनियोग,, इत्युत्तरसूत्रं विवरीतुकामेन पुनर्भगवता " तस्य संयमस्य जितभूमेर्या अनन्तरा भूमिस्तत्र विनियोगः । न ह्यजिताधरभूमिरनन्तरभूमिं विलङ्घ्य प्रान्तभूमिषु संयमं लभते । तदभावाच्च कुतस्तस्य प्रज्ञालोक,, इत्यभाषि । तमेतमर्थं प्रमाणयता "योगेन योगो ज्ञातव्यो योगो योगात्प्रवर्तते । योगमत्तस्तु योगेन स योगे रमते चिरमि,, त्युदाहारि कारिका च हैरण्यगर्भी । एतेन ध्यानभूमिकामिव तदनन्तरभूमिं हि समाधिनाम्नीमधिरुह्यैव कृतकृत्यतां समीयुषो योगिव्याघ्रस्य कथन्तत्र साहसिकतया चरमभूमेस्समाधेरुपपद्येत समुज्झनं कथं वा चारितार्थ्यमभिमन्येतात्मनो ध्यानादेवापरिपूर्तिकसंस्थानात् । विलङ्घनसाहसे तु कृतपदे एव न भवेतामिति समाधिभूमिरुपसेव्यत

एव योगिवर्येण । तथा च "तैलधारावदविच्छिन्नस्मृतिसन्तानरूपा ध्रुवास्मृति,, स्समाधिभूमिमाजुषाणा जह्यादेव स्वात्मावस्थामित्युपावृत्तन्यायेन कतिचित्क्षणानभ्युपगम्यमानाऽपि निरुक्तिस्सा निजौत्सुक्यनिर्वर्तनमात्रैवेत्यापद्यते । मुधाविधाननिहतत्वात् । न चायं योगसाधनक्रमाभ्युपगमः पातञ्जलानामनिष्ट एव श्रीवैष्णवानां नो विरूपाणामिति युक्तमुद्वर्तनं हन्त ग्राहयितुम् । शास्त्रमात्रस्यैव तित्याजयिषितत्वापत्तेस्तर्हि सुस्थत्वे "तिरुवामुळ,, संज्ञकद्रविडप्रवन्धप्रतीतरुदितैरेव नित्यनैमित्तिकादिक्रियाकलापस्य प्रोच्चालयितव्यत्वविपत्तेर्भोक्तव्यत्वात् । इत्थञ्च स्मृतेरन्यदेव ध्यानमिति पर्यवसितोऽर्थो रुचिरोऽपि सन्न रोचते चेत्तुभ्यन्तर्हि तयोरैकार्थ्यावगाहिनिगमनिरुक्तव्याकरणादिनिरूढप्रमाणवचनोपन्यसनं विधत्स्व निर्भरम् । तदेतदप्रदर्शितमेवेति प्रदर्शनमत ऊर्ध्वं वा कुतस्त्वयाक्तास्पदं नीयेत । न हि स्मृतेर्भावनाप्रकर्षाद्दर्शनरूपता । स्वस्याः स्मृतिरूपतैव । साहजिकत्वात् । स्मृतावावर्त्यमानायां संस्कारदृढिमैवानुभविकः न तु जातु दर्शनरूपता । तस्यास्तु साक्षात्काररलक्षणानुभवमात्रस्वरूपत्वात् । न ह्यनुपासनप्रकरणगतो 'विदिरुपासन' पर्यायतां लभते । न वा पुनरुपास्तिस्तत्पर्यायभावम् । पदानामसङ्कीर्णप्रवृत्तिनिमित्तव्यवस्थाविधानस्य व्याकोपात् । अत एव "मनो ब्रह्मेत्युपासीत । भाति च तपति चे" त्यादिवाक्यगतयोस्तयोरितरेतरविभिन्नार्थकताया भिदावदाय तुभ्यमतितरामेवारुच्यापादनपात्रत्वे निरूपितरीत्या उपासनस्मृत्योर्दर्शननिर्वचनयोश्चाप्रामाण्यज्ञानानास्कंदितत्वानौचित्यात् । इत्थञ्च वेदनोपासनस्मृतीनाम्परस्परम्पार्थगर्थ्यमेवेत्यनवद्यम् ।

यच्चोक्तं दर्शनरूपता च प्रत्यक्षतापत्ति"रिति अनुपपन्नन्तत् । पराक्तस्मृतिसंस्थासमानाकारत्वेन तदनापत्तेरेवार्थसिद्धत्वात् । न चैतदर्थसंसिद्धौ " विज्ञाय प्रज्ञाङ्कुर्वीत । अनुविद्य विजानाति । ओमित्येवात्मानं ध्यायत । निचाय्यतम्मृत्युमुखात्प्रमुच्यते । आत्मानमेव लोकमुपासीत । आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यस्सोऽन्वेष्टव्यस्स विजिज्ञासितव्य" इत्याद्यानामुदाहृततया प्रामाणिकमेवास्मन्निरूपणमित्याशङ्कितव्यम् । श्रुतीनाममूषां तन्निरूपणाननुग्राहकत्वात् । श्रुत्योरादिमयोर्निदिध्यासनकालीनाखण्डार्थज्ञानस्थितिसम्पत्सम्पन्नता तृतीयायाः प्रणवार्थानन्यात्मविषययथाभूतप्रत्ययपर्योजनता पञ्चम्याः पुनः प्रत्यगर्थैकगोचरपरानुरागोपहितमतिमत्ता चतुर्थ्याश्च तदर्थापरोक्षसा-

क्षात्करणसमानकालीनससन्ताना विद्यालक्षणमृत्युसञ्चारसमाचारसामान्यपरिमुक्तता अन्तिमायास्त्वात्मानुभवविभूत्युत्कर्षोद्देश्यकेतिकर्तव्यताविघटनानुकूलयावत्कार्यपरावेशमोषणम्प्रत्युत्तरोत्तरमुत्तममहिमानुभवभूमिश्रवणमनननिदिध्यासनानान्तावद्विधेयच्छायासमुन्नीतसाधकतमानाञ्च गतिमत्ता चेत्येष एवापाक्षिकोऽर्थो वेदार्थो न तु सोऽयं केवलपाक्षिकलक्ष्मीकान्तसमाराधनप्रसाधनानुरूपो महेशादिमाहात्म्यराकारमणज्योत्स्नाप्रच्छादकराहुवादिः कदाचिद्वा कथञ्चित् । न हि "नायमात्मा प्रवचनेन लभ्य" इतिश्रुतिः प्रत्यक्षतापन्नापवर्गसाधनभूताऽस्त्येव । अस्याः प्रवचनादिसाधनपरम्परासमासादनप्रयाससहभाविपरमात्माऽभिमुखीकरणकरणत्रयक्रियाऽभिप्राणनप्रयुक्तप्रकृष्टोद्यमनपरताया एव कृत्ये किल सर्वस्मिन्ननुगताधिरोहरूपायाः परं वास्तवत्वात् । न चैषा श्रुतिः केवलश्रवणमनननिदिध्यासनानामात्मप्राप्त्यनुपायत्वसङ्कीर्तनगोचरा उपपद्यते । स्वातन्त्र्येण श्रवणादीनामुद्योतनाय प्रवृत्तप्रकरणाभाववत्त्वादेवास्याः ।

वस्तुतस्तु श्रवणादित्रितये निर्विषयोऽप्यात्मैव विषयतामभिपद्यत इति पर-

३३ प्रसङ्गादत्र निष्कृष्टार्थव्यक्तीकारः।

प्रेमास्पदता हि तस्मिन्मुमुक्षूणामनुक्षणमनुवर्तत एव । निर्विशेषादात्मन एतस्मात्त्वर्वाचीनस्वरूपापन्नविष्णोस्त्वद्रुपासनाविषयस्य भिदावादप्राणितस्याप्रसक्तप्रसक्तिकतया न तद्वरणाभावो वेदान्तेषु दोषाय प्रभवेदिति विरमन्ति तावत्तद्विषयाद्धि दुराग्रहग्रहसम्बन्धात्सुविचारकाः । मुमुक्षव एव सन्तः श्रवणादिप्रवृत्तिमन्तस्त एतेऽवच्छेदकावच्छेदेन तद्विषयपरमात्मनः प्रियाः प्रियतराः प्रियतमाश्च सम्पद्येयुरेवाप्रत्यूहम् । अन्यथा प्रवृत्तिरेव श्रवणादौ नोदीयात् । तत्र हि यथाशास्त्रम्प्रवृत्तिमन्तः कृत्स्ना एव परमात्मनि प्रीतिमन्तो मन्तव्याः । यथा चाहु "रीश्वरानुग्रहादेषा पुँसामद्वैतवासना । शिवप्रसादंल्लभते योगसिद्धिञ्च शाश्वती"मिति स्मृतिकाराः । न च "तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् । ददामि बुद्धियोगन्तं येन मामुपयान्ति ते । प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रिय" इत्येते भगवत उक्ती तदभिप्रेतप्रसाधनपरे । 'सततयुक्तानामिति' पदप्रतिपाद्यानुक्षणप्रयुज्यमानब्रह्मात्मैकत्वलक्षणसमाधिमतामेव तदात्मकभजनभाजामखण्डार्थप्रतिपत्तिप्रदानसामर्थ्यमन्तराऽऽत्मानवच्छिन्नसत्तापरायत्तमिति तादृशसमाधिमाहात्म्यप्रज्वलिताद्वैतात्मभावा हि महानुभावाः "पुनर्ब्रह्मविद्ब्रह्मैव भवती,, त्यादिश्रुत्या ब्रह्मब्रह्मविदोरनन्यात्मकतां प्रोद्बोधयन्त्या

तद्भावापत्तिरेवेति च प्रतिपत्तेः । 'युजसमाधावि' ति पाणिनिस्मरणा "द्योगस्स-माधिस्स च सार्वभौमः । वृत्तिहीनं मनः कृत्वा० योगोऽयं मुख्य उच्यत,, इति योगभाष्यदक्षस्मरणकृतनिर्वचनाभ्याञ्च "युञ्जानः प्रथमं मनस्तत्वाय । युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चित,, इत्येतदृगवयवसमनु-गृहीताभ्यां मदुपवर्णितस्यैवार्थस्य निरवद्यत्वात् । न हिं त'त्राहम्ममे' त्युत्तमपु-रुषप्रयोगो भगवता स्वात्मन्येव कृतोऽस्तीति भ्रमितव्यम् । देहादिसङ्घातसम्ब-न्धानधीनकेवलप्रत्यगात्मपरताया एव तयोः पदयोः प्रागेव प्रतिपादितत्वात्प्र-त्यपादयामचामुमर्थमद्वैतसाम्राज्ये । एवञ्चोदाहृतमुक्तिकाद्युपनिषद्वचोविशेषव-लादपि श्रवणादीनामेव मोक्षहेतुभूततत्वधीप्रयोजकता सङ्गच्छते न तु तेभ्यः प्राची-नायाः किल भक्तेस्त्वदाक्रोशवासितायाः वा । एतेन "ब्रह्मशब्देन च० पुरुषोत्त-मोऽभिधीयते । ब्रह्मशब्दश्च विष्णावेवेति,, रामानुजानन्दतीर्थवल्लभादिभिर्विहिते

१४ रामानुज-मध्ववल्लभादि-भिः कृतस्य किल ब्रह्मपदार्थनिर्वच-नस्यान्याय्यत्वा-वेदनपूर्वकं वस्तु-तत्वव्यक्तीकर-णम् ।

ननु ब्रह्मशब्दार्थनिर्वचने निर्विशेषं परात्मानमनादृत्य नूनं पा-क्षिक्यामेव विष्णुदेवतायां प्रयुक्ते परमयुक्ते इतियथोपन्यस्तप्रमाण-वचोजातेन संक्षिप्तसारभूतेन प्रत्युक्ते वेदितव्ये । न हि सार्वभौमो जि-ज्ञास्य इत्युक्ते परिच्छिन्ना मण्डलाधीशाः कतिपयजनपदपतयो वा जिज्ञास्यन्ते । तेषां तत्र तत्पदतात्पर्याविषयत्वात् । अपि त्वशे-षवसुमतीसाम्राज्यपरिरक्षणक्षमो विशिष्टगुणगणमहितः पुरुषविशेष एव जिज्ञासाकर्म-त्वेनावधार्यते । यदन्वयितावच्छेदकयोग्यताक्रान्ततया शब्दं यं प्रयुञ्जते प्रयो-क्तारस्स एव तद्विषयविषयितयाऽऽञ्जस्येनोपादीयते प्रतिपत्तृभिः । न तु ततो व्या-प्यधर्मावच्छिन्नास्तदुपसर्जनीभूता वा मनाक् । अप्रस्तुतत्वादन्याय्यत्वाच्च । एवमेवेह सूत्रे प्रयुक्ताद्धि ब्रह्मपदादानियत्ताकसत्तावत्प्रमेयगोचरात्स एव दृश्यातीतचैत-न्यधातुःस्वारस्येन चेतस्सरणावारोहेत्पदमपि पर्यायभूतन्तस्य त्वात्मनामक्रमेव स्वस-मानाभिधेयसत्तावत्प्रयुज्येत । तत्वतस्तु "तस्य वाचकः प्रणव,, इति सूत्रं हि पातञ्जलं प्रणवमेव महेश्वरस्यैकान्ताभिधानतया बोधयति । "तज्जपस्तदर्थभावन,, मित्युत्तरसूत्रं वाचकस्य प्रणवस्य जपन्तथा तदभिधेयस्य महेश्वरस्य भावनञ्च निराह । इममेवार्थं "अदृष्टविग्रहो देवो भावग्राह्यो मनोमयः । तस्योङ्कारः स्मृतो नाम तेनाहूतः प्रसीदति ॥ प्रणवो वाचकस्तस्य शिवस्य परमात्मनः । शिवरुद्रा-दिशब्दानां प्रणवो हि परः स्मृत,, इति विष्णुपुराणे वर्णयाम्बभूव भगवान्कृ-

ष्णद्वैपायनः । एतेन शिवरुद्रविष्णुप्रजापत्यादिनामानि तत्तच्छक्तिष्वेव रूढानि ब्रह्मणि शक्तिद्वारा प्रयुज्यन्ते । प्रणवस्तु साक्षादेव ब्रह्मनामेति तस्याधिक्यम-धिगम्यते । "ओओंतत्सदिति निर्देशः । ओमित्येकाक्षरं ब्रह्म । ओमित्येतदक्षरमिदं सर्वम् । ओमिति ब्रह्मेति,, श्रुतिस्मृतिवचनान्यत्र मानं भवन्ति । "मात्रास्तिस्रस्तु विज्ञेया ब्रह्मविष्णवीशदेवताः । तासां समुच्चयं त्रिमाः परब्रह्मावबोधकम् । जपं-श्च प्रणवं नित्यं ब्रह्मविष्णुशिवात्मकम् । कोटिसूर्यसमं तेजो ध्यायेदात्मनि नि-र्मलमि,,त्यादीनि योगयाज्ञवल्क्यस्मरणान्योङ्कारमात्रार्थतया ब्रह्मविष्णुमहेशानभिधाय ब्रह्मैव तेषां समष्टिभूतं प्रणवार्थत्वेनाद्धा निर्धारयन्ति निष्पक्षम् । एवञ्च ब्रह्मा-दित्रितयान्यतमे विष्णावेव पुरुषोत्तमपदान्तरव्यवहार्ये ब्रह्मशब्दशक्तिं व्याचक्षाणः श्रीभाष्यकर्ता तस्य ह्यान्ध्यं प्रचेतयमान एव पुनः श्रुतप्रकाशिकाकृत्तावेताव-ध्यवनि विध्यवननिरीक्षणक्षमैः किंवृत्ताविति विभाव्येतान्तावत् । तस्मादत्र विष्णुपुरुषदेवेश्वरशब्दा अप्यध्यात्माधिकारे पठ्यमानाः प्रतीयन्ते । उदिताधि-कारे तु "ब्रह्मविदाप्नोतिपरमि,, त्याप्यं वस्त्वनाधेयातिशयस्वरूपभूतम्प्रतिज्ञाय "सत्यं ज्ञानमनन्तं ब्रह्मेति,, स्वरूपलक्षणञ्च तस्याभिधाय "तस्माद्वा एतस्मा-दात्मन आकाशस्सम्भूत,, इत्यनेन मध्ये पुनस्तदेतदात्मशब्देन परामृश्या "नन्दं ब्रह्मणो विद्वानि,, त्याद्यन्तेनोपसंहृतं प्रतिपद्यामहे । न स्त एव तावदत्र योग-रूढब्रह्मात्मपदाभ्यामन्तरा पुरुषोत्तमविष्णुशब्दावत्यन्तम् । नापि पुनस्तयोः प-र्यायभूतनारायणगोविन्दादयो न वा तद्वद्रामकृष्णपुरोगमाः । न च " स उत्तमः पुरुषः । हरिर्यथैकः पुरुषोत्तमः स्मृतः । उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृत,, इति श्रुतिस्मृतिवचनैः पुरुषोत्तमशब्दो नारायणशब्द इव भगवद्वासुदेववचन एवे-ति भूमितव्यम् । महादेवादिदेवेष्वपि "पुरुषोत्तमो महादेवो परमात्मा पिनाकभृदि-ति,, भारतादिवाक्यैर्देवदेवे गिरिजाजानावितरत्र कमलासनादौ पुरुषोत्तमपदस्य प्र-योगबाहुल्यदर्शनात् । 'उत्तमः पुरुषस्त्वन्य' इत्यस्य क्षराक्षरोपाधिद्वयदोषासंस्पृ-ष्टस्सच्चित्सुखात्मकस्ताभ्यां विलक्षणो यस्स उत्तम उत्कृष्टतमः पुरुषः पूर्णत्वा-'दनामगोत्रमि' तिश्रुत्या नामादिव्यवहारातीतत्वेऽप्यनवाच्छिन्नप्रकाशाद्यात्मतया परमात्मव्यपदेशभाग्गम्यते । अन्नमयाद्यानन्दमयान्तेभ्य आत्मभ्योऽविद्याकल्पि-तेभ्योऽभ्यन्तरतमः परमः प्रकृष्ट आत्मा च सर्वभूतानां प्रत्यक्चेतन इत्यतः परमा-त्मेत्युदाहृतो वेदान्तेषु । न हि वाच्यवृत्तिनिरूपितबोध्यत्ववचनः 'पुरुषोत्तमोऽभि-

३५ क्रमशः श्लोकशरीरान्तःपातिपदार्थपरीहारोयथामानम् ।

धीयत, इत्यत्राभिधातिरुपपद्यते । अभिधानेष्वमरादिषु परमात्मानञ्च ब्रह्म प्रस्तुत्य तत्पर्यायतया पुरुषोत्तमाह्वयाभिधानाभावात्पुरुषोत्तमं वा प्रक्रम्य ब्रह्मपरमात्मनामधेयसहपाठप्रत्ययाच्च । न चोक्तगीताधृतपुरुषोत्तमपदमिन्दिरारमणस्यैवालक्ष्यते वक्तृ । तस्य हि तम्प्रति गमकत्वे प्रकरणादिनिर्णायकासम्पत्तेः । न चा "य्यतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तम,, इति स्वानन्यात्मकताविनिवेदकनिजवचनाद्धुत्तमपुरुषप्रयोगसमलङ्कृताद्भगवतः पुरुषोत्तमशब्दो विष्णुमेव वक्तीति वाच्यम् । 'अहम्ममे' त्यादयः शब्दास्तत्रत्याः प्रत्यक्चैतन्यैकलक्षका एव न तु भगवन्निजदेहावच्छिन्नकर्तृत्वाद्युपहितरूपसमर्पका इत्यसकृदावेदितत्वात् । न हि स्वरूपसत्तामात्रपरिनिष्ठितात्मा हि भगवानर्वाचीनस्वरूपाभिनिवेशनात्मश्लाघाविशेषाभिनयजन्यन्यौन्यप्रकारैकरूपकेण कञ्चिदर्थमुपादित्सेद्द्वै ताटवीदुर्द्धमधग्धरामण्डले। इत्थञ्च स्वपक्षो हन्त कदर्थसङ्ग्रथनात्मा व्यक्तीभवतीति शास्त्रप्रतिपाद्यार्थासिद्धौ तदैकदेशभूतपरपक्षप्रतिक्षेपस्य कान्वत्र प्रत्याशा । न हि तावत्सर्गादिकमेककालीनमनभ्युपगच्छन्तो भाट्टप्रभाकरौ दूषणविषया वां विषमास्ते कदाचिद्वा भवेयुः । युगपज्जन्मादिकमङ्गीकुर्वाणयोर्वा युवयोर्जगज्जननजीवनाहरणकर्त्तृकमलाभर्त्तृमहेशपितामहानामुपन्यस्तविधया स्वरूपपरिज्ञानाभावात्सपर्यापाण्डित्यमस्तमयते कञ्चिच्छिपिविष्टपादाब्जयोरपि यतः । न हि लीलाशब्दस्साक्षिमात्रेश्वरवादिहैरण्यगर्भपरिहारे भवेच्छक्यप्रयोजनः । ईश्वरे त्वैश्वर्यवदेव साक्षित्वधर्मानपाये तवापि विच्छेदाभावात् । स्थितिमात्रनियन्तरि विष्णौ 'जन्मस्थेमभङ्गादिलील, इत्येतत्त्रितयप्रयुक्तविशेषणस्यास्यायुक्तत्वाच्च । "लोकवत्तु लीलाकैवल्यमि,, ति ब्रह्मसूत्रमपि समष्टिभूतब्रह्मप्रतियोगिकनिर्माणाद्यौपयिकलीलामात्रत्वमाधिगमयति न तु व्यष्टिभूतस्य विष्णोस्तथात्वम् । तथा सति भवस्यापि भगवतस्तद्वत्तासौकर्यप्रसक्तेस्स्यादसावङ्गीकार्यतरत्वापत्तिः । न हि 'विनते' त्यादिपदे जीवब्रह्मणोर्भेदैकग्राहिका काचिदस्ति शक्तिरानुशासनिकी यतो भेदन्तयोः पराकुर्वाणास्तदादिवादिनां शिक्षयितारश्च कस्मिंश्चिदप्यंशे आक्षिप्याः स्युर्ब्रह्मज्ञानवादिनस्तव पित्रादेर्वा पितामहाः । विनतिर्वा छलनमयी तव नोचितैव नारायणम्प्रति ज्ञानवाद्यात्मभूतपुरुषैकगम्ये च त्वदादिशिवद्रोहिमातिमात्रवेत्तर्यत्युच्चैः । भेदश्च जीवब्रह्मणोरुपरिष्टान्निपुणतरं श्रीभाष्यस्थान्येवावतार्यवाक्यानि निराकरिष्यत एव । न वा 'श्रुतिशिरसी' ति वचनप्रयोगमात्रत एव वेदब्राह्मचार्वा-

कादिमतव्युदासो युक्तग्रहः । नं वा पुनस्तेनैव पदेनानुमानिकेश्वरवादिप्रतीकारो युक्तियुक्तः। चार्वाकवत्तवापि वेदबाह्यतामापन्नस्य द्रविडभाषाप्रबन्धार्थैकसौहृदस्यान्तर्मनसि वेदान्वा विद्विषतो बहिस्तु वेदप्रदेशप्रकाण्डानेव रुद्रसूक्तपावमान्यशतरुद्रीयादिभूरिमाहात्म्यदेदीप्यदमृतनामधेयसांसिद्धसकलपुरुषार्थान्नाट्यपटचालनालीलायितमापद्यते श्रुतिशिरोवचनानुवदनम् । न च वैष्णवानामस्माकं शिवमाहात्म्यवाचिसूक्तानुवाकादीनामग्राह्यतैव सर्वश एव स्वेतरभजनपरिमार्जनालम्बिनियमवतामुचितेति वाच्यम् । वैष्णवत्वस्यैव वेदबाह्यतया प्रागेव पराकृतत्वात् । अत्रापि नारायणस्यैव सार्वात्म्यं मन्यमानानां तत्सत्तातिरिक्तसत्ताया एवाप्रत्यये प्रत्याख्येयञ्च वस्तु स्वाधीनसत्ताकमनुर्वरितं सत्कस्य वा दुर्भगाः कुर्युर्व्युदसनमिति नियोगपर्यनुयोगे प्रवर्तिते सम्प्रतिपन्नप्रातिवचनाभावेन मूकीभवनमाश्रित्य वैष्णवतादुराग्रहस्य त्याज्यत्वापत्तेर्वज्रलेपायितत्वात् । न ताव "द्विनते,, त्यादिपदेनैवानुमानिकेश्वरवादिनो व्युदस्ता इति युज्यते वक्तुम् । आगमैकगम्ये हीश्वरे तद्विषयविवेचकतया तदितिकर्तव्यतासम्पादकं नाम सदनुमानमागमानामनुग्राहकमेव सत्तन्निपुणा ह्यानुमानिका लोकलोचनानामुन्नायकाश्चानिन्द्या एव यतः । न हि "ब्रह्मणी,, त्यनेनाब्रह्मात्मकप्रधानपरमाणुकारणवादिसाङ्ख्यवैशेषिकादिव्युदासो मीयते कार्यकारी । ब्रह्मवादमिषेण व्यष्ट्यात्मनो विष्णोरेव शिवे भगवति गाढतरवैमनस्यपुरस्सन्दास्यमाचरतान्तु देहात्ममात्रवादितया क्व ब्रह्मणीति शब्दमौलिसम्पत्तिः क्व वा साङ्ख्यवैशेषिकादिव्युदास इति वाक्छलनकिल्बिषाद्विरम्यतान्तावत् । तत्वतस्तु कपिलकणादादयो भगवत्पूज्यपादैर्ब्रह्ममीमांसादिभाष्ये समर्मकं सुशिक्षिता एव प्रत्यर्थम् । मास्तु पुनस्तच्चोरतया तव तन्निरासजम्बुकालापः । त्वत्तोऽप्यधिभुवि कोटिश आधिक्यमधिरूढानान्नाम वादिदानवानां पूज्यपादपाथोजमरन्दरोलम्बमानश्रीमत्पद्मपादसुरेश्वराद्याचार्यवर्यैर्हरिहिरण्यगर्भाद्यंशावतरणैर्वादातिवादचक्रभ्रमणचूर्णीकरणक्रियाभागितायास्त्वया अप्यात्ममोक्षणाय, शश्वाद्विभावनीयत्वात् । न वा पुनः "श्रीनिवास,, शब्देन पाशुपतादिपरीहारो योग्यनिरूपणः । नारायणोपनिषदि 'नमो हिरण्यबाहव' इत्युपक्रम्य "आम्बिकापतय उमापतये पशुपतये नमोनम,, इत्युपसंहारश्रुत्या पशुपतेर्महेश्वरस्य मुमुक्षूणां नम्यत्वेन ध्येयत्वेन चाम्नातस्य "निर्मितं हि मया पूर्वं श्रौतं पाशुपतं शुभम् । गुह्याद्गुह्यतमं सूक्ष्मं वेदसारं विमुक्तये,, इति प्रक्रम्य "एष पाशुपतो योगस्सेवनीयो मुमुक्षुभिः । भ

हितमिति निरूपणम् । थिवीमग्ने । स ँ सृज्यमातृभिष्ट्वं ज्योतिष्मान्पुनरासद । त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् । त्र्यायुषं जमदग्ने । कश्यपस्य त्र्यायुषम् । यद्देवेषु त्र्यायुषम् । तन्नो अस्तु त्र्यायुषम् । अग्निरिति भस्म वायुरिति भस्म जलमिति भस्म । स्थलमिति भस्म व्योमेति भस्म । सर्व ँ ह वा इदं भस्म । मन एतानि चक्षूँषि भस्मानीत्येवमाद्याः प्रतीततरा अधिगम्यन्ते । गृह्यकल्पकारा हि आपस्तम्बकात्यायनबौधायनसत्याषाढगोभिलपिप्पलादपुरोगमा विनियोगमेतेषामभिदधुर्विभूतिधारणाम्नायार्थव्यवस्थापकाः सोत्साहम् । त एते पूर्वपूर्वकल्पकृन्मुनिमण्डलीनिरूपणमनतिलङ्घमाना मर्यादां किल सनातनीं प्रतिष्ठापयाम्बभूवुरद्वन्द्वाः । अत एवाद्यावधि शिष्टविशिष्टपरम्परापरिप्राप्ताः प्रत्यर्थमशेषा एव वर्णाश्रमिणः तद्धारणाधीनसदाचारशीलितचेतसो विजयन्ते तत्वरसिकाः । भस्मधारणात्मनस्त्रिपुण्ड्रस्य तु वैदिकत्वं ताद्रूप्येण हि तस्यासन्दिग्धाविपर्यस्तमहाजनसमाचारगोचरत्वं चादिमाश्रममारभ्यान्तिमाश्रमपर्यन्तमभिविहितशोचिष्केशसमाराधनाभिनिष्पन्नप्रत्यासन्नवस्त्वात्मनो विश्वजनीनमनुभूयते । तद्धारणमन्त्रा अपि "मेधावी भूयासम् । तेजस्वी भूयासम् । वर्चस्वी भूयासमायुष्मान् भूयासम् । अन्नादो भूयासम् । सर्वसमृद्धो भूयासमि" त्येते लसन्ति विश्रुताः । तत्वे च भस्मनः परीक्ष्यमाणे त्वनवधिकातिशयशुचित्वोपहितं तावद्धोमयं भवत्यस्य मूलद्रव्यम् । प्रकृतिभूता खल्वस्य विश्वश्रुत्यादिपारम्परीपरिष्टूयमाना किलास्ति जगद्वन्द्या क्षीरसर्पिरादिहोमीयवस्तुपूगप्रदानौपयिकयशोवर्चोवद्धिशिष्टव्यक्तिभूता परमसाधारणसर्जनक्रियाभिगामिनी च महेशितुः । तथाच मन्त्रा " यत्ते चर्म शतौदने यानि लोमान्यघ्न्ये आमिक्षां दुहूतां दात्रे क्षीरं सर्पिरथो मधु । बृहस्पतिनाऽवसृष्टां विश्वे देवा अधारयन् वर्चो गोषु प्रविष्टं यत्तेनेमां संसृजामसि । बृह० अधारयन् तेजो गोषु प्रविष्टं यत्तेनेमां संसृजामसि । बृह० अधारयन् पयो गोषु प्रविष्टं यत्ते० संसृजामसि । बृह० अधारयन् यशो गोषु प्रविष्टं यत्ते० संसृजामसि । बृह० अधारयन् रसो गोषु प्रविष्टो यत्ते० संसृजामसि । बृह० अधारयन्ति,,त्येवंभूता अथर्वणसंहितायाः प्रकाशन्ते । कृच्छ्रचान्द्रायणाद्यनेकव्रताभिनिर्वर्तनवेलायां दैनन्दिनधार्मिकव्यापारसामान्यशुचित्वापादकदर्भादिद्रव्यनिवहनिरूढसन्निवेशसमाकाङ्क्षितायामखिलैरेव स्मरणैः स्मर्तॄणां मन्वादीनां पञ्चगव्यं ननु

गोमयगोमूत्रादिप्रातिस्विकसत्तासमास्कन्दिताभिधेयभूतं प्रतिपद्यन्ते पर्युपादेयतयाऽऽस्तिकगणाः । अवैशेष्यादेव तस्मात्प्रत्युत ततो विशिष्टतया गोमयमुपादीयते कृते तावद्विभूतेः । यथाहुः स्मर्तारः "आग्नेयमुच्यते भस्म दग्धगोमयसम्भवम् । तदेव द्रव्यमित्युक्तं त्रिपुण्ड्रस्य महामुने । अग्निहोत्राग्निजं भस्म विरजाहोमजं तथा । औपासनसमुत्पन्नं समिदग्निसमुद्भवम् । समिदग्निसमुत्पन्नं धार्यं वै ब्रह्मचारिणा । शूद्राणां श्रोत्रियागारपचनाग्निसमुद्भवम् । अन्येषामपि सर्वेषां धार्यं दावानलोद्भवमि"त्यादि । एवञ्च भस्मन उपादानोपादेयादियथोदितस्वरूपसाक्षात्कारपर्यालोचनया वैदिकं पुरग्नितेजोविशेषपरिष्काराविग्रह"मग्निरित्यादिभिर्मन्त्रैः शुद्धं ब्रह्माभिमन्त्रितम् । शिवमन्त्रेण तद्धार्यं मन्त्रेणाष्टाक्षरेण वा । गायत्र्या वा च देवर्षे मन्त्रेण प्रणवेन वा । करोति शिवमन्त्रेण यस्त्रिपुण्ड्रं द्विजोत्तमः । त्र्यक्षः शुद्धतरः सौम्यः शिवलोके महीयते । अष्टाक्षरेण मन्त्रेण यः करोति त्रिपुण्ड्रकम् । विष्णोः पदमवाप्नोति नान्यथा श्रुतिचोदितम् । सौरं पदमवाप्नोति गायत्र्या मुनिसत्तम । प्राप्नोति ब्रह्मणो रूपं प्रणवेन न संशय" इत्येवमाद्यभिमन्त्रणाभिधायिवचोविशेषैः पुलस्त्यस्य महीकृतमध्यवसीयते भस्म । न चास्य धारणे शैवा एवाधिक्रियन्ते नेतरे वैष्णवादय इति भ्रमितव्यं वा वञ्चयितव्यम् । शिवविष्णवादिदेवता व्यष्ट्या पुनः समष्ट्या समाराधयतः सर्वान्प्रत्यविशेषेण तद्धारणविधानविशेषस्य संश्रवणात् ॥

७१ वैष्णवादिमतानाञ्च सम्प्रदायानां वेदबाह्यताप्रतिपादनम् ।

यत्तूक्तमविचारकेण केनचिच्छैवानां त्रिपुण्ड्रमूर्ध्वपुण्ड्रं तु वैष्णवानां विहितं भवतीति तद्दुरुक्तम् । शैववैष्णवत्वादिभेदभिन्नव्यवस्था एव वेदबाह्यत्वात् । नो खलु वेदे शैवाः शाक्ता वा वैष्णवा इत्येवंभूताः शब्दविशेषा अधिकृत्याधिकारिणः परिपठिताः क्वचिदपि दृश्यन्ते । उपासनामृते देवतायास्तत्तस्याः साम्प्रतिकदुर्भगाग्रयाप्युपकल्पितं वैष्णवादिमतं न भवत्येव लोचनविषयं विशिष्टविदुषाम् । अत एव भगवच्चरणैः समूलमुन्मूलिता अभूवन्नेव दिग्विजयमहोत्साहे हेलयैवैते दुरात्मानो वैष्णवादिकम्मन्या वर्त्मान्तरानुयायिनश्च सहस्रशः । मृतानां तावत्तेषामुपजीवका अधुनातना अप्यमी मृतका एव सन्तः स्वस्वरूपानुरूपमेव निर्लज्जा जल्पन्तीति चित्रं न जातुचित् । नसिद्ध्यन्ति चेच्छैववैष्णवादयो वेदतः के तर्हि भवन्तस्तदपहारशीला इति चेदत्राभिदध्महे ब्राह्मणपरिव्राजकन्यायेन वनसिंहन्यायेन वा

श्रोता: पुनरौपनिषद्रा भावामो वयमिति । न मनाक् शैववैष्णवादिशब्दाभिधेया: स्मो यतो वयमनावेयातिशयशाल्युपासनासु यथाप्रस्थानं भगवद्धरिहरादौ निरूढचेत:-सञ्चारसाम्राज्यरञ्जिता अप्यखिलोपाध्यनवच्छिन्नप्रत्यगात्मज्योतिषो याथात्म्यपरिनिष्ठापरावृत्तिप्रयुक्तपरमार्थप्रभूंशनमसहमाना: स्तोकतरं वा । न हि वैष्णवादिमतभेदा: स्वातन्त्र्येण वेदानां विषयतया सम्प्रदायापरपर्यायतया वा उपादातव्या: । तत्तद्देवतामाहात्म्याद्यवबोधनाकारप्रवृत्तिमत्त्वेऽपि परमर्षीणां प्रस्फुरत्प्रतितन्त्रार्थसर्वस्वसन्दीपितात्मानो निरवच्छिन्ने परे सर्वतन्त्रसिद्धान्तभूत अभिधानादिपाक्षिकव्याहारसामान्यविधुरे च सत्ताधिष्ठाने प्रज्ञामात्मीयां प्रचोदितवन्तो महानुभावा नार्वाचीनविषमविषवल्लीसमानाकारवैष्णवादिमतविभेदानां बीजिभावभाविता भवेयु: कथञ्चिद्वा । एवञ्च "पूर्वपूर्वै: स्वशिष्येभ्य: कृतस्योपदेशस्य विषयीभूतो ह्यर्थ: सम्प्रदायशब्दार्थ इत्युक्त्वा "येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्वतो ब्रह्मविद्याम् । समित्पाणिरि,,तिमानञ्चात्रोदाजहार दुर्जनकरिपञ्चानने तेङ्गलरङ्गाचार्यस्तच्च पुनरालम्ब्य "सम्प्रदीयते गुरुणा शिष्यायेति सम्प्रदायो वेद" इति कुसुमाञ्जल्यां वर्द्धमानोपाध्यायकृतसम्प्रदायशब्दव्युत्पत्तिं तां न्यवेदयद्व्यामोहविद्रावणे तदग्राह्यम् । अपास्तसमस्तवैष्णवाद्यश्रेयोवहसम्प्रदायस्याद्वन्द्वहृदयाम्बुजातसौरभाविभासिविज्ञानिजनसहस्रसाक्षात्कारगोचरस्याखण्डार्थज्ञानैकसमधिगम्यमानस्यैवात्मतत्वस्य जिज्ञासोरुपदेश्यस्य प्रतीततरसमीहाकृतार्थीकरणसत्ताकत्वेन तत्प्रत्येव प्रशास्तृभावो ब्रह्मण्यानामुपपद्यते तरां यत: । व्युत्पत्तिश्चोपाध्यायानां वेदविषया सा यथोदितदु:सम्प्रदायासहा न कथञ्चित्कैवल्यवर्त्मपथकण्टकायितवैष्णवादिसम्प्रदायान्वतालीकार्थतमस्तोमसमाच्छन्नानधिकुर्यादपि वा द्वितीयावस्थायाम् ।

७२ दुर्जनकरिपञ्चाननव्यामोहविद्रावणमार्त्तण्डकृतां वाचश्चात्रार्थे सुशिक्षिता भवन्ति ।

यत्तु "बृहदारण्यकभाष्यारम्भे आहु: शङ्कराचार्या: । "ॐ नमो ब्रह्मादिभ्यो ब्रह्मविद्यासम्प्रदायकर्तृभ्यो वंशर्षिभ्यो नमो गुरुभ्य" इतीदमुदाहरन्नर्थतोऽसत्सिद्धान्ततमिस्रामयस्यैव सत्सिद्धान्तमार्तण्डस्य कर्ता च कश्चित्किञ्चिदशुद्धं शुद्धाद्वैतं स्वीयसिद्धान्ततया मन्यमानो मुमुदे तन्मन्दम् । अमन्दमतिमननैकयोग्यनिगूढाभिसन्धिसन्धानासमर्थचेत:पराहतत्वादुदितवाक्योदाहर्तुरासमन्तात् । न खल्वसौ वाक्यव्यक्ति: प्रकृतप्रसङ्गानुकूलार्वाचीनवैष्णवादिमतयाथात्म्यव्यवस्था-

पनौपयिकदुःसामग्रीप्रवाहपतिता वा तस्याः समुत्तेजनविज्ञानवद्धादरा कथमप्यु-न्नीयते । प्रत्युत तयोरेतयोर्विघटनानिरूपकविरूपसामग्रीं बिभ्राणैव सम्मीयते । न च निरस्तनिखिलोपाधेर्ब्रह्मणो विद्यया परया प्रतीत्यास्पदतां भजमानस्य सकाशा-दपरया समधिगम्यमानवस्तुनोऽपि भाविकताव्युदाससम्भवे प्रमाणेतरविषयीभूत-बालमूर्त्तेर्वत गोपीशस्य स्त्रीवत्पामरमानसविलासवासनाकर्मीभूताया विशिष्टस्वार्थो-पादानसमास्थानलक्षणसम्प्रदायपदवेदनीयता मन्त्रादिव्यक्तेर्वा प्राप्नोति स्वारस्यात् । न ह्यनाधेयातिशयाद्द्वन्द्वब्रह्मविद्यासम्प्रदाय इव वैष्णवादिसम्प्रदायो वेदानां वि-षयो भवत्यवान्तरतया वा । उपास्ते भगवतो भोगीशभोगशयनस्यास्मान्मत्या-स्तिकशिखामणिमहेन्द्रान् परमाभ्यर्हितत्वेऽपि तन्निर्वाहाय तत्सम्प्रदायस्य तेङ्गड्-थडहलसातानिभेदभिन्नस्य रामानुजीयस्याञ्जनेयदेवतोपाहितस्य तस्यैवानन्दतीर्थस्य गोपालबालमूर्त्याद्याराधनप्रधानस्य च वल्लभस्य तद्वद्राधारमणपरिचर्यापर्युपासिभू-तनिम्बार्कस्येतरेतरविभिन्नाकारविकारप्रकाराक्रान्ततिलकादिसमुपादानजन्योपद्रवभू-यस्त्वप्रत्ययग्रसितस्य वैरवैश्वानरज्वालामालाजटालस्यानुपदमनुगतकामक्रोधाद्युद्दी-पनतया भगवत्कृपामात्रपराङ्मुखत्वेनानन्तं गत्वा निरयपरम्परावगतेरप्रतीकार्हत्वा-त् । न हि भगवन्तं नारायणं स्वतो निर्लिङ्गं किल लिङ्गं प्रामादिकमानवमनोवि-कल्पविषयीभूतकुङ्कुमहरिद्रासहभाविश्वेतमृत्तिकोर्ध्वपुण्ड्रस्याङ्गारसहकारिगोपीचन्द-नादिपुण्ड्रस्य कुङ्कुमगुलालपरिलालितपुण्ड्रान्तरस्य चेतरेतरविरोधालम्बनमनवस्थि-ततरमयुक्तियुक्तमुन्माननिलयनञ्च वल्गेज्जातु चित् ।

यत्तु दुर्जनकरिपञ्चाननव्यामोहविद्रावणयो "स्तदा प्रभृति शुभ्राणि नि-त्यं पुण्ड्राणि धारयेत् ॥ सर्वैः श्वेतमृदा कार्यमूर्ध्वपुण्ड्रं यथा वि-धि ॥ मृत्तिके हन मे पापं यन्मया दुष्कृतं कृतम् ॥ मृत्तिके देहि मे पुष्टिं त्वयि सर्वं प्रतिष्ठित मि"त्यादिवचनोपदर्शनपुरः-सरमूर्ध्वपुण्ड्रं मृत्तिकया परिकल्पितमालोक्यते तत्त्वनादेयम् । द-र्शितगत्या वेदादिबाह्यत्वाद्रामानुजमुखमर्दने निबन्धे तत्कृतपरि-करविजयस्यापार्थतामतिष्ठापनबद्धप्रतिज्ञे श्रीमद्भिर्माधवाचार्यैः सपरिकरमपाकृत-त्वाच्च तथाविधतयोदाहृतोर्ध्वपुण्ड्रस्य । न हि पुस्तकयोरेतयोरुदाहृतगीर्निकरः श्रौतो वाऽस्ति स्मार्त इत्यालोच्यतान्तावत् । वेदेषु तदत्यन्ताभाव एव सँस्मृतिषु तु स्वीयैककल्पितासु प्रक्षिप्यमाणः सोऽयमुभयवादिसम्मताशेषविश्रुततरस्मृत्यर्थप्रि-

७१ रामानुजीयाद्यूर्ध्वपुण्ड्रमश्रौतञ्चास्मार्त्तमिति भस्मत्रिपुण्ड्रन्तु श्रौतं यत्तदिदमेवमेवं धारणीयमित्यादिप्रतिपादनम् ।

प्रतिषिद्धो विभाव्यते यतः । न चैवमादिविरोधिवचनानां प्रतिवादिकल्पितत्वमनुद्घाट्य समन्वयं समर्थयन्तो भगवत्पादप्रभृतयो वृथामतिकर्दमे प्रविष्टा भवेयुः । किञ्च नास्तिका म्लेच्छहूणादयश्च सर्वे श्रुतिस्मृत्यादिप्रमाणजातं कल्पितं वदन्तीति कस्ततो भेदस्तदैकदेशस्य कल्पितत्वं वदतामित्येषा न चतुरस्रा उक्तिर्व्यामोहविद्रावणकृतः सुतराम् । निर्विशङ्कं विरोधिभिः परिकल्पितं वस्तु शतकृत्वः सम्परीक्ष्य यादृशं तु तादृशतयैवाज्ञापयतां तेषां भगवतां यावदाभासव्यवहारपटलीसमुत्सादनौपायिकसमवताराणां च नारायणवद्देवाराध्यत्वात्त्वाम्प्रति वैष्णवम्मन्याग्रयायिभ्यः प्रशास्तॄणां पुनरस्माकं विनेयमानवं खल्वासमन्तात् । न हीह "मृत्तिके हन मे पापमि" त्यादिर्मन्त्रो मृदोर्ध्वपुण्ड्रधारणं विधत्ते । न वा तस्मिन्कल्पे न केनचिद्विनियुज्यत आपस्तम्बबौधायनादेः प्रत्युत स्नानाह्वय एव कर्मणि तदादिश्रौतसूत्रैर्विनिबद्धमस्य विनियोगं विजानतां तावद्व्याख्यानमनीदृगेव सदूर्ध्वपुण्ड्रधारणप्रकारपरतां निराचष्ट इति विस्पष्टम् । न च स्नाने विनियोगवद्धारणेऽप्यूर्ध्वपुण्ड्रस्य कथं न स्यादस्याः श्रुतेः स इति भ्रमितव्यम् । असत्येव कल्पप्रमाणे कल्पयिता किल विनियोगस्य साहसिकत्वादनुपादेयवचनश्च पूतिडिण्डिमसमाश्रय उपसर्पेद्यस्मात् । दूषणमण्वपि मा प्रसञ्जीति कल्पसूत्रानुकूलमेव भाष्यार्थमवगाहनकालीनाभ्यर्थनाविशेषविषयं मृदधिष्ठात्र्याः खलु देवतायाः संस्मरणोपजातपावित्र्यव्यक्तीकार "अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुन्धरा । शिरसा धारयिष्यामि रक्षस्व मां पदे पदे । भूमिर्धेनुधरणी लोकधारिणी उद्धृतासि वराहेण कृष्णेन शतबाहुनेति" मन्त्रान्तर्वर्त्यश्वक्रान्तेतिविशिष्टविशेषणपदार्थैरासाञ्जितमवधारयन्त्येव सुमनोगणाः पदवाक्यप्रमाणपारावारपारदृश्वानः । न खलु मृदेषा निजनिमित्तान्महीकृता निर्निमित्ते हन्तोर्ध्वपुण्ड्रे उपक्रमपरामर्षोपसंहारव्यवहारहीने करगात्मतामश्नुते मनाग्वा । तदिदं सिद्धमस्या अपि श्रुत्यर्थव्यक्तेर्बाह्यतया वेदबाह्यमेवोर्ध्वपुण्ड्रमिति । एतेन महाग्रयायिमदापवदनन्यायतः समस्ता एव वैष्णवसम्प्रदायमानिनो निरस्ता एवोर्ध्वपुण्ड्रवचनावलीकल्पयितारो वेदितव्याः स्थालीपुलाकन्यायतश्च । न च मयूखादिसङ्ग्रहकारैरनुष्ठेयतयोपवर्णितमूर्ध्वपुण्ड्रं स्मार्तैरिह सहसा कथङ्कारं त्वयाऽपाक्रियत इति चोदितव्यम् । लोकचर्यापर्यालोचनायां प्रचलत्सम्प्रदायमानिमानवाऽचारमात्रानुवादितया तेषामितो विलक्षणस्य 'त्रिपुण्ड्रं भस्मना कुर्याच्चन्दनेन च सुव्रतः । प्रातः ससलिलं भस्म मध्याह्ने

गन्धमिश्रितम् । सायान्हे निर्जलं भस्म एवं भस्म विलेपयेदि" ति व्याघ्रस्मृत्या गृह्यसूत्रेण च "भस्मना ललाटे ग्रीवायां दक्षिणेऽंसे हृदि च त्र्यायुषमिति प्रतिमन्त्रमिति" पारस्करीयेण वैदिकतयैककण्ठ्येन संस्तूयमानत्रिपुण्ड्रप्रच्छायाऽवलम्बिनो वंशपत्राकारपरिलालितस्यैव सङ्कीर्तकतया च तदभिप्रेतश्रुत्यादिबाह्यसाङ्केतिकोर्ध्वपुण्ड्रस्वरूपनिरूपकत्वाभावात् । न चा "यथाचाराल्लभते धर्ममाचाराल्लभते धनमि"त्यारभ्यो "र्ध्वपुण्ड्रं धारयेदि" ति गौतमसूत्रमस्मदूर्ध्वपुण्ड्रप्रशंसापरायणं ननु नालमन्यथयितुमिति व्याहर्तव्यम् । सूत्रस्याप्यस्योदितवंशपत्राकारपुण्ड्रस्यैवावेदकत्वात् । यतोऽत्रापार्थकसम्प्रदायवञ्जनविकल्पितेतरेतराविरुद्धपुण्ड्रानुकार्य्युल्लेखस्यैवात्यन्तिकोऽस्त्यभावः । न हि मदिरामत्तविलक्षणेक्षणेनालक्षितमपि वस्तु जह्यान्निजभावं जातु चित् । न वा तस्य स्वरूपविदो जहति तत्वमतनुमतयः । न चैतावता वैष्णवसम्प्रदायोऽस्माकीनः स्थवीयानेव सन्नपलापेनान्यथाभावं नाप्नुयात्तावकीनेनेत्यभिनिवेष्टव्यं सुमन्दमतिभिः । निरूपि-

७४ यथोक्तवैष्णवमतिनामप्युपासनायाः परा मात्राऽद्वैतब्रह्मधीरेवास्तीति ताञ्वेदनादृत्य विष्णुभक्त्यैकरतत्वे विनिगमनायां शिवमहिमानं महीयांसं प्रदर्श्य धियो यथोक्तायाः स्थिरीकरणम् ।

तगत्या सम्प्रदायानां तावद्वैष्णवानां वेदबाह्यतासंसिद्धावद्वैतब्रह्मविद्यासम्प्रदायस्यैव कर्मोपास्त्योरपेक्षया निरतिशयवैदिकत्वे काण्डत्रयाचारप्रचारौपयिकसम्प्रदायपदाभिधेयाभ्युपगममात्रत्वे च श्रुतयस्ताव "दथाश्वलायनो भगवन्तं परमेष्ठिनं परिसमेत्योवाच । अधीहि भगवन्ब्रह्मविद्यां वरिष्ठां सदा सद्भिः सेव्यमानां निगूढां ययाऽचिरात्सर्वपापं व्यपोह्य परात्परं पुरुषमुपैति विद्वान् । तस्मै सहोवाच पितामहश्च श्रद्धाभक्तिध्यानयोगादवेही"त्येवमात्मान उज्जृम्भन्ते खल्वादावेव कैवल्योपनिषदः। एताभिरिह प्रश्नप्रतिवचनतात्पर्यपर्युपेताभिरनवच्छिन्नवस्तुयाथात्म्यमेवाञ्जस्येनोपदिश्यते निरस्तसमस्तेतरवस्तुसत्ताकञ्च सर्वकालम् । मध्ये पुनरुपनिषदो "विविक्तदेशे च सुखासनस्थः शुचिः समग्रीवशिरः शरीर" इत्येतया किल श्रुत्यैकान्तावाससम्पादनाधीनाऽसनादिसाधनविभेदसन्दृब्धावान्तरप्रकरणप्रतिपादिन्या "ऽत्याश्रमस्थः सकलेन्द्रियाणि निरुद्ध्य भक्त्या स्वगुरुं प्रणम्य । हृत्पुण्डरीके विरजं विशुद्धमि" त्याद्यव्यवहितोत्तरगीर्ग्रामसम्पिपादयिषाविशेषविषयीभूतसगुणध्यानसमितिकर्तव्यताकृतकृत्यया चातः परं "ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात् । स ब्रह्मा स शिवः स हरिः सेन्द्रः सो-

ऽक्षरः परमः स्वराट् स एव विष्णुः स प्राणः स कालोऽग्निः स चन्द्रमाः स एव सर्वं यद्भूतं यच्च भव्यं सनातनं ध्यात्वा तं मृत्युमत्येति नान्यः पन्था विमुक्तय" इति वाक्कदम्बप्रतीत्याऽलम्बिविमुक्तिदशाविशेषचरमपर्यायतयाऽन्ते परं "सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि सम्पश्यन्ब्रह्म परमं याति नान्येन हेतुने" त्यादिपदपङ्क्तिप्रद्योतितसर्वाऽनन्यत्वप्रतिपत्तिलक्षणनिस्तुलविभूतिप्रोद्बोधपर्यायतयाऽन्तान्ते भृशं "सूक्ष्मात्सूक्ष्मतरं नित्यं तत्त्वमेव त्वमेव तत् । जाग्रत्स्वप्नसुषुप्त्यादि प्रपञ्चं यत्प्रकाशते । तद्ब्रह्माहमिति ज्ञात्वा सर्वबन्धैः प्रमुच्यते । त्रिषु धामसु यद्भोज्यं भोक्ता भोगश्च यद्भवेत् । तेभ्यो विलक्षणः साक्षी चिन्मात्रोऽहं सदाशिवः । मय्येव सकलं जातं मयि सर्वं प्रतिष्ठितम् । मयि सर्वं लयं याति तद् ब्रह्माद्वयमस्म्यहमि" त्यादिगभीरवाग्विलासलास्यतत्त्वम्पदाभिधेयभूताद्वन्द्वदशातिशयशाल्यवगतिलक्षणसार्वात्म्यप्रतिष्ठापनवैदग्ध्योद्वीक्षणया स्वेतरोदीरितसम्प्रदायसामान्यं तावदाग्रहभरेणासहमानया प्रत्याख्यानमेव नितरां भिदावदानां विधीयमानं प्रतिपद्यामहे प्रकृतगत्यैव कृत्स्नोपनिषदुदर्कपरामर्षोपसंहारेभ्य उपनिगीतप्रत्यक्ब्रह्मैक्यान्यप्रकरणकात्स्न्र्यमनात्मतयोद्बोधयद्भ्योऽनुगतोहापोहसामञ्जस्यमाप्नुवद्भ्यश्चाप्रत्यूहम् । नह्युपनिषदा "मीशकेने" त्यारभ्य "रहस्य ऋचः मुक्तिके" त्यन्तानामष्टोत्तरशतसङ्ख्याकानामेकतमयाऽपि तयैकतमो वा सम्प्रदायो वैष्णवस्तात्पर्यविषयतया प्रतिपादनमर्हति कथञ्चिद्वा । तद्रूपाभिव्यञ्जनलक्ष्मणोऽन्यतमायां वा तासां सुतरामप्रत्ययात् । यदि "नारायणाद्ब्रह्मा जायत" इत्यादिवचोभ्यो नारायणोपनिषद्गतेभ्यस्तज्जातीयेभ्यो वेतरोपनिषद्गर्भेभ्यः स्वाभिनिवेशमुदितात्मानं सिद्धं मन्यसे तर्हि तन्न्यायेनैव पिप्पलादोपनिषदि समाम्नाताभ्यो "ऽथ पैप्पलादो ब्रह्माणमुवाच भो भो भगवन्ब्रह्मविष्णुरुद्राणां मध्ये को वाऽधिकतरो ध्येयश्च तत्त्वमेव नो ब्रूहीति । तस्मै सहोवाच पितामहः बहूनि पुण्यानि कृतानि येन तेनैव लभ्यः परमेश्वरोऽसौ । यस्याङ्गाज्जायन्ते हरिरुद्रमुख्या मोहं न जानन्ति सुरेन्द्रमुख्याः । प्रभुं वरेण्यं पितरं मायिमीशं तं वै विभुं पितरं देवतानाम् । ममापि विष्णोर्जनकं देवमीड्यं योऽन्तकाले सर्वलोकान्स जह्रे । य एकः श्रेष्ठो महिष्ठश्च रुद्रो यो घोरवेषमास्थाय शरभाख्यं माहेश्वरं नृसिंहं लोकहन्तारं सञ्जघान महाबलः । हरिं हरन्तं पादाभ्यामनुयान्ति सुरेश्वराः । मावधीः पुरुषं विष्णुं विक्रमस्व महेश्वर । कृपया भग-



वान्विष्णुं विददार नखैः खरैः । चर्माम्बरो महावीरो वीरभद्रो बभूव ह । स एको रुद्रो ध्येयः सर्वेषां सर्वसिद्धये" इति वाग्भ्यो ब्रह्मविष्ण्वादेर्जनयितारं पुनः सर्वशस्तन्नियन्तारं महेश्वरमेव सर्वेश्वरं प्रतिष्ठापयन्तीभ्यो "ब्रह्मैव शरभः साक्षान्मोक्षदोऽयं महामुन, इत्यन्तिमवाचा महेश्वरमूर्त्यन्तरशरभस्य ब्रह्मत्वमोक्षप्रदत्वयोः समर्पयन्त्या परिष्कृततराभ्यो व्यूहमेव वैष्णवम्मन्यानां समूलमुन्मूलयन्तीभ्योऽस्मदभ्युपेतं तावदद्वैतब्रह्मविद्यासम्प्रदायमेव निखिलोपनिषत्पराभिसन्धिसन्धानात्मानमशेषयुगीयमहाजनसामान्यसमाचारगोचरमानन्दतरङ्गिणीविशेषैकजननं कुतो न आत्मनः कृतकृत्यतायै सुविभावयेः । दुरावेशमेव तथाऽविभावने निदानं मनुषे तदा तु सौभाग्यकथा ते दुर्दैवहता नूनमारण्यककुस्तुम्बुरूण्येवानुषते विदुषां समीक्षया । सकला अप्युपनिषदो भवदभ्युपेतविरूपविग्रहापन्नेन्दिरारमणस्वरूपावेदकपदकैवल्येनाप्यलम्भावमनापन्नास्सम्प्रदायमेव स्वाभिप्रायहीनं हन्त वैष्णवं न सहन्ते स्वप्नान्तेऽपीति मन्वीथाः । समासहस्रेणापीतरेतरविरुद्धोऽसौ सम्प्रदायो मन्त्रा वा नियमा वा तिलकानि वा आचारा वा न प्रसिद्ध्यन्ति ताभ्यस्तत्प्रत्यायकपदस्य वा वाक्यस्य तत्राप्रत्ययात् । प्रत्युत भवन्त्येव गर्हापदं तन्मानात् । मानान्तराणि तु मन्वादिस्मरणानि च कल्पाः सर्वश एषां विरोधिन इत्यसकृदवादिष्म। अनुमयाऽप्यमी अर्था अपार्थतयैवाध्यवसीयन्ते तथाहि श्वेतमृत्पार्ष्णिग्राहिहरिद्रातिलकञ्च सपादं तेङ्कलरामानुजीयानामपादेन हि तेन वडहलानां वैमत्याभावं नापद्यते निजरुचिमात्रहस्तग्राहगृहीतत्वादितरेतरम् । यदेवन्तदेवम् । यथा हीक्षणे त्रियामान्धदिनान्धयोः । माध्वं तिलकमङ्गारविनिवेशभङ्गिशृङ्गारशैलीविलासलास्येन वाह्लभेन तिलकेन न सम्प्रतिपत्तिं बिभ्राणमवगम्यतेऽन्योन्यमान्ययैव मत्याऽन्योन्यस्मिन्ननादेयताविषयत्वात् । यन्नैवं तन्नैवम् । यथा चार्कफलसुमनसी । परिशिष्टा अपि तत्सम्प्रदायमानिनो विरूपविन्यासवत्तिलकविशेषं स्वीकुर्वाणास्तामेवामान्यसरणिमात्मीयां विनिवेदयन्तीति नैकोऽपीतरेतरसन्निधौ प्रामाण्यमभ्युपेयात्सम्प्रदायो न वा तटस्थीभूय तद्याथार्थ्यमार्गमाणानां सम्मुखे सम्प्रतिपत्तिं कथञ्चन प्रत्याययेत् । एवञ्च चक्राङ्कोर्ध्वपुण्ड्रे तु सन्दर्शितवाक्येभ्यो हन्त वादिना शब्दार्थाभ्याम्प्रतिकूलतरेभ्यो व्यर्थे पुनरनर्थे ऽवधार्यैते । दशायामेवंविधायां "देवास" इत्यादेर्वाक्यस्यालीकयोग्यतावतः का वा चक्राङ्कनविधानावगाहिविवरणशोभा यतो जगत्यां ग्राह्यार्थप्रकार-

विदो नैवैवंविधदुरालापसौभगभूम्यां विमुह्येयुः । न हि समाघ्रेयसौरभसम्भारा हिं घ्राणव्यक्तिरगन्धं वा दुर्गन्धमुत्सहेद्गोचरीकर्त्तुं कथञ्चित् । तदिदं देवासविवरणाभासमुपेक्षितत्वेनापि प्रत्युक्ततरं वेदितव्यम् ॥

इति ब्रह्मणः सायुज्यम् । देवास इत्यादिवाक्यार्थयोरुपमर्दनम् ॥

अथ "निचिक्षेपसुषणं भिद्यमानम्मध्ये बाहुमदधत्सुदर्शनम् । विष्णोरिदं भूरिदं भूरितेजः प्रधर्षति दिवानक्तं बिभृयुस्तज्जनासः" ॥ १ ॥

७५ पुनरपि कल्पितवाक्योदाहरणच्छलेन तत्साङ्कनशङ्कायां तन्निरासः ।

इत्येषा याजुषबृहदारण्यकशाखाश्रुतेः सुदर्शनोपनिषद्यपि प्रासिद्धायाः सद्भावेनानवद्यमेव नश्वकाङ्कनादिविधानम् । तन्न । अत्यन्तावद्यत्वात् । न ह्यध्वर्युशाखासु शुक्लकृष्णाभिधानभेदभिन्नासु बृहदारण्यकशाखा का चिदस्ति यतस्तद्भेदो विद्वद्भिर्मन्येत । नापि सुदर्शनोपनिषदुपनिषत्स्वस्ति काचिन्माननीया । उभयतोऽप्यमानविषयत्वात् । सर्वशोऽधीयमानबृहदारण्येऽप्यतीतवाक्यप्रकल्पयितुस्तच्छाखाभेदस्य तद्गततया च वाक्यस्यास्य कल्पनाकरणे कोन्वत्र स्यात्परिश्रमः । तत्रापि खिलश्रुतिरिति सञ्ज्ञां तस्या महतीं जनयामास । इदमपि महदेव साहसम् । परमत्र शोचयितव्यन्त्वेतावदेवात्र जगत्यामध्येतृपरम्पराकप्रवीरा अनुगृह्णीयुर्वा निगृह्णीयुरिति । दुरावेशस्तूभयीमपि विचारणान्न स्पृशेदेवाल्पामपीति नावतरत्यत्रापि विस्मयो विदुषाम् । यदीयं तत्रत्या स्यात्तदा दग्धविग्रहावयवा एव विजानीयुरितरे पुनस्तान्त्यजेयुः श्रुतिवाचमिति न शक्यते नियन्तुम् । खिलमपि वचनं वचनमेव सद्वचनीयार्थानामवचनदेशीयव्यवहारं नोपादद्यात् । अविशेषेणैव विजानानास्तद्वचनं तदर्थे पुनः श्रद्धाभरमात्मीयं प्रकुर्युर्वा स्वप्रसङ्गात् । न विजानते न वा प्रकुर्वते तमेतं प्रत्युत शब्दार्थयोः श्रवणादेव त्रस्ताः सर्व एव वा प्रायशः । तादृग्रूपाः कथङ्कारममुमभिधेयं स्वयमनुतिष्ठेयुरनुष्ठापयेयुर्वा नरानितरान् । उभयोरपि विचारणालावण्यरञ्जितत्वात् । अर्थादत्र निर्विचारचेतसामियञ्चेष्टा शश्वच्चित्रीयते । सेयं विचारशालिभिश्च निश्चितमतिभिर्व्यपोह्यैवापद्यते शतशस्तथाहि । ये खलु तत्साङ्गास्ते बाहुमूलमध्ये मतिविभ्रमात्लोहशलाकामेव तप्तां निक्षिपन्ति तयैव चिन्हितं परिदृश्यते हाहेत्यादिकूजिताऽऽक्रन्दनपुरस्सरं तन्मध्यम् । न तु सुदर्शनेन कथञ्चन महतामपि कालत्रयनेत्राविषयेण च विष्णोरेव दिव्यदेहसद्वसतिना । न हीदं वस्तुतस्तद्देहादपक्रामति । भगवतो नियतायुधत्वात् । नापि देवदानवा वा भरेयुरेतन्मु-

हूर्त्तमात्रं महाबलाः । अत्यल्पबलानान्तु मानवानां तद्धारणनामश्रवणस्यैव भैरवास्त्रत्वे साक्षादेव धारणविधानधाष्टर्यं न कश्चित्कल्पान्ते वा कर्त्तुं प्रभवेत् । तस्मिन्नेव देवतात्मनि भूरितेजोवत्त्वेऽप्यभितप्तलोहशकले काकणिकामात्रमूल्यलभ्ये देहदाहैकफलप्रदातृत्वमृते जीवच्छवसमानाकारविशदमशेषशिष्टजनस्पर्शनभाषणादिनाह्यमन्यन्न किञ्चित्प्रतिपद्यन्ते फलं प्रदग्धगात्राः । बाहुमूलमध्ये मन्यमानमेवंरूपं सुदर्शनं शरीरनाशे विनश्यमानं प्राग्भिरेव भस्मान्तं यातैस्तथारूपैः सहास्तमयासीदिति साम्प्रतिकानां भस्मैव तस्यावतिष्ठमानं संसेव्यमापद्यते त्वदादीनाम् । उत्तरकालीनानामपि तदेव तस्याराधनाय वर्त्तिष्यते इति तद्भस्मसन्तानसंसेवकाः सन्तु चायुष्मन्तो युष्मादृशाः सर्वदा जगत्याम् । तप्तसुदर्शनस्यैतादृशदुर्गतिकत्वे तदावेदकतया श्रुतितया च दग्धतनुभिः संयोजितपदावल्या "निचिक्षेपसुषणामि" त्येवंविधायाः शब्दार्थनिर्वचनसौभाग्यं किमात्मकमित्युदासीना विभावयन्तु दोषज्ञाः । विशिष्य तन्निर्वचननिरासपरतायामस्माकं कालहानिरेव केवलमिति विरम्यते ततो नीरसादित्यलमेतावता ॥

इति निचिक्षेपेति कल्पितवाग्व्यूहभस्मीकारः ॥

अथ "पवित्रमित्याग्निः । अग्निर्वै सहस्रारः । सहस्रारो नेमिः । नेमिन तप्ततनुः । ब्रह्मणः सायुज्यं सलोकतामाप्नोती,, ति सामवेदीयमैत्रायणशाखाश्रुतिः साक्षादेव चक्राङ्कनविधानमवबोधयन्ती कृतार्थनेवास्मानातनुते । मैवं वादीः । तत्वस्यास्यान्यथाभूतस्यैवेह ग्राहयितव्यत्वाद्विचारकवरान् । तदेतत्परिहृतवाक्यजालस्वरूपसंवेदनाधीनविकृतप्रकाराकारमेव सदंशान्तरेण व्यतिरिच्यमानदूषणभावमाधत्ते। पवित्रपदवाच्यतावच्छेदकावच्छिन्नस्य नानात्व एकत्वेनावधारणस्य स्वाभिनिवेशविभेदसङ्कोचितस्यापाकरणैकपात्रत्वात् । यथोक्तं निरुक्ते "पवित्रं पुनातेर्मन्त्रः पवित्रमुच्यते येन देवाः पवित्रेणात्मानं पुनते सदेत्यपि निगमो भवति । रश्मयः पवित्रमुच्यन्ते गभस्तिपूतो नृभिरद्रिभिः सुत इत्यपि निगमो भवति । आपः पवित्रमुच्यन्ते शतपवित्राः स्वधया मदन्तीर्बह्वूदकाः । अग्निः पवित्रमुच्यते । वायुः पवित्रमुच्यते । सोमः पवित्रमुच्यते । सूर्यः पवित्रमुच्यत इन्द्रः पवित्रमुच्यत इति । अग्निः पवित्रं स मा पुनातु वायुः सोमः सूर्य इन्द्रः । पवित्रन्ते मा पुनन्त्वित्यपि निगमो भवती" ति । न च प्रकरणस्यास्य सुदर्शनविषयतयाऽग्निरेव

७६ पवित्रमित्यादिवचसां समुदितप्रामाण्यबलेनाङ्कनयोग्यताकत्वादिप्रतिपादनम् ।

तद्देवतावाची पवित्रपदाभिधेयभूततयाऽत्रोपादीयत इति साम्प्रतम् । शब्दैरेतैः सुदर्शनस्यागम्यमानत्वे वाक्यादेतस्माद्वाक्यान्तरयोरतीतानन्तरयोरवश्यमेवोदाहर्त्तव्यत्वात् । अलीकवर्णावलीं प्रति त्वेतामलीकतरवाक्ययोः पूर्वापरीभूतयोरुपस्थापने खिद्यन्मानसस्य प्रवृत्त्यभावोपपत्तिरुचितैवोपजायते । यदीदं वाक्यं सत्यं स्यात्तर्हि पूर्वापरे अपि ते ससंभ्रमं प्रदर्शिते स्याताम् । नोदाहार्य्यन्यतरदपीत्येवमेव तन्मानसमवसीयते । "तुष्यतु,, नयेनाभ्युपेत्यापीदं वाक्यं सुदर्शनं वा तेन हि दाहो वा देहे नाभ्युपेयते । अपि त्वग्निरेव यागादौ परमेश्वरस्य प्रतीकभूतपवित्रमित्यादिविशेषणविशेषान्वितश्चाभिमन्यते । तथा हि । यथाऽवक्लृप्तप्रतिपादनबलादिह च सामानाधिकरण्यबलात्पवित्राग्निपदयोः प्रथितानुभावात्त्वग्निदेवतैवा "ग्निरस्मि जन्मना जातवेदा घृतं मे चक्षुरमृतं म आसन् । अर्कस्त्रिधातूरजसो विमानोऽजस्रो घर्मो हविरस्मिनामे" त्यृचा यथोदिताशयातिशयसम्भृतया संस्तूयते सेयं देवता "सहस्रारनेमि" पदवाच्यताविभेदं गत्वा तया तया भजमाना विराजते सकलास्वेव संस्थासु पाकयज्ञहविर्यज्ञसोमापराभिधानास्वतिवेलम् । तयैवेह नेमिपदवेद्यतामुपयातयाऽग्निदेवतया यावद्यागनिर्वर्त्तनालम्बनभूतया तप्ततनुः निजतन्ववच्छेदेन तपिनोपस्थाप्यमानसम्पादितयागापूर्वमहाविभवोऽनशनादिव्रतविभेदसंस्कृतात्मा यजमानो निष्कामकर्मण एतस्य हि महिम्ना ब्रह्मणः सायुज्यसालोक्यावाप्तिप्रयोजकीभूतचेतोनैर्मल्यमात्यन्तिकमभिपद्यत इत्येवार्थस्साधीयान् । न तु तप्ततनुपदं तप्तलोहशलाकया देहावयवदाहं ब्रूते । तस्य तु पश्वादिसाधारण्यात् । साक्षात्सुदर्शनेनापि दामोदरदेहदेदीप्यमानेन ब्रह्मसायुज्यादिफलानवाप्तौ किम्पुनरप्रयोजकतमेन कार्ष्णायसेनैतेनेत्यज्ञेनापि विज्ञातव्यत् । न च "चक्रश्चाक्रः पविर्नेमिः पृथक् चक्रस्य वाचका" इति माधवाचार्यवचनविरोधो मन्तव्यः । पृथक्पदप्रयोगस्वारस्याच्चक्रस्यैव रथादिगमनप्रयोजकीभूतस्य सम्प्रत्ययात् । उपस्थितन्तावच्चक्रं भौममपहायानुपस्थितस्य सुदर्शनस्य नूनमुपादाने तत्राप्यभाव एवास्ति विनिगमकस्यानुक्रमणिकायाम् । सुदर्शनस्य क्लीवन्तत्वे "चक्रश्चाक्र" इति पुल्लिङ्गनिर्देशोऽपि न युज्यते । यदीदं वचनमेतत्प्रयोजननिर्वाहाय शरणीकरोषि तर्हि "मध्वमुखविध्वंसिनी रामानुजमुखमर्दनादौ तैरेतैः समर्थितं तप्ताङ्कनदौरात्म्यं कुतो न विभावयेः । यदीदं हास्यायाप्यभिमतमभविष्यत्त एते खण्डनमस्यादरभरैस्तत्र चान्यत्र नाकरिष्यन् । कृतवन्त एव ते सन्ति तव तु तिरस्कर्तार एव मशकाय-

मानस्य । न हि ब्रह्मपदस्य नारायणोऽर्थो युज्यत आपेक्षिकः । अनापेक्षिकस्यैव तदर्थत्वादिति प्रागेव तस्य निरस्तत्वात् । न हि सायुज्यशब्दः समानभोगत्वलक्षणं परमं मोक्षमभिधत्ते । मोक्षेऽपि भोगव्यवहारानुवृत्तौ तत्कृतोच्चावचफलपरिणामलक्षणोपद्रवजाताद्व्यावृत्तिरेव कदाचिन्न स्यात् । भोगैर्नानाविधैर्बन्धनदशाऽनिशमुपसर्पेत् । यदपि "सुदर्शनमहाज्वाल कोटिसूर्यसमप्रभ अज्ञानान्धस्य मे देव विष्णोर्मार्गं प्रदर्शये" ति कल्पितपदसमूहं मन्त्रतया न्येवदयत्तदप्यग्राह्यम् । कुत्रत्योयं मन्त्र इति प्रश्नं प्रस्तुत्य प्रतिवचने मूकीभावस्यैव पर्य्यवसानात् । न च वेदसूते विष्णोर्मार्गदर्शी कश्चिदस्ति विज्ञाता । न हि विष्णोर्हेतिः सुदर्शनं स्वगात्रवसतिरज्ञानान्धान्मार्गं दर्शयदुपपद्यते । अपि त्वेवमादिदुराचारान्धर्मत्वेनावगाहयतान्तावत्तामसयोनीनमन्तकाले शिरच्छेदनायैवोद्यतं विज्ञायते शास्त्रविद्भिरिति सन्तोष्टव्यम् । पवित्रादिपदगोचरदुरालापपरिहारस्य प्रागेव विहितत्वाद्भक्तैः कल्पितपदसमूहमास्थायात्राधिकतरतिरस्करणमुपेक्षितं वेदितव्यम् ॥

**इति पवित्रमित्यग्निरित्यादिपदपङ्क्तिपरिधूननम् ।**

अथैवमपि "चक्रं बिभर्ति वपुषाऽभितप्तं बलं देवानाममितस्य विष्णोः ।

७७ "चक्रंबिभर्त्ति„ स्थितयाऽपि वाचा तप्ताङ्कनमन्याय्यमेवेति निरूपणम् ।

स एति नाकं दुरिता विधूय प्रयान्ति यद्यतयो वीतरागा" इत्यृग्वेदश्रुतिशरण्यानां नस्तप्तलाञ्छनसंसिद्धिरस्त्येवाप्रत्यूहेति । अत्रोच्यते निराकृतवाक्यनिकरसहोदरायमाणतरमेतदपीति । पठ्यमानर्क्शाखास्वाश्वलायनशाङ्खायनशाकलनामवाच्यास्वन्यतमायामप्यनुपलम्भादेवैतस्या वाचः । वाचमेतां बाष्कलशाखीयतया माध्वा हन्त ग्राहयन्ति परमेषा शाखा समुत्सन्ना कथमेषा वाक्तद्गततया तैरपि वाऽधिगता बभूवेति चिन्त्यमेव समन्ततः । माध्वास्त्वमृतस्य विष्णोरिति विशन्ति यद्यतय इति चान्यथैवाभिदधति श्रीवैष्णवम्मन्यास्तूक्तानुपूर्व्या । एवञ्च श्रुतिश्चेदियमुभाभ्यामेताभ्यां द्वैरूप्यं न प्राप्येतैकरूपत्वात् । प्राप्यमाणन्तु कल्पितमेवैताभ्यां यथाकाममिति विवादमस्ति निश्चिता मतिः सत्यप्येवं दुराग्रहदूरीकरणाय स्वरूपमेतस्या विविच्यते तथाहि । अमितस्य वाऽमृतस्य विष्णोरमरादिरक्षणं सुदर्शनन्नाम चक्रं बिभ्राणो ब्राह्मणादिर्मानवो ज्ञाननिर्धूतपापा इव परिव्राजका निरस्तसमस्तकषायः कैवल्यं लभत इति वाक्यार्थे गम्यमाने तप्ताङ्कनावेशवशीभूतमानसः पृष्टोऽत्र व्याचष्टां पूर्वेषामपि पूर्वजा वा तत्रापश्यन्किं तदेतच्चक्रं सुदर्शनसमाह्वयमाहोश्विदशृण्वन्नवलोकितव

क्राणां मुखदेशादिति । अनुत्तरमेवोत्तरं वास्तवमस्ति वादिनः । दर्शनश्रवणयोरेव स्वेषां वा स्वस्य रत्नाकाररत्नावलीसुमनोहरकान्तिश्रवणसमानयोगक्षेमत्वात् । एवन्तर्हि वपुषा विष्णोश्चक्रस्य हि सुदर्शनस्य धारणं कल्पान्तेऽप्यसम्भवतरं कथमेते बिभृयुर्मलिनात्मानः । को वा बिभर्त्येवं वक्ता बिभ्राणं वा तमेतं को न्वत्र प्रत्येति बिभ्राणो वा परान्प्रत्यापयति के वा पुनः सुस्थात्मानो धारणे वतास्मिन्सुदर्शनीयतया विश्वस्युः किन्तु कार्ष्णायसवस्तुनो मुद्रणमेव दात्रादितुल्ययोग्यतावतो यावच्छरीरपातमनुभवन्ति । एतावता भगवतः सुदर्शनस्य कथा क वाऽन्तर्ध्यानमयासीत् । अयोमय्या मुद्राया नन्वस्या मनोवाक्कायमालिन्यमूर्त्तिरेव प्रभवन्त्यनुभूयते । दशायामेतस्यां वीतरागैर्यतिभिर्ज्ञानविज्ञानपरिपूतात्मभिः समं क वा साम्यं स्यात् । तस्यैव स्वप्नालोकितलोकजाततुलनावत्वे तद्वतः कैवल्यस्य न कथञ्चिदेषामर्हता कल्पान्ते वा स्यात् प्रत्युत ज्ञानसाधनविरोधिसामग्र्यामेवमात्मिकायां निषण्णाः खल्वमी ज्ञानैकफलीभूतपरमपदप्रतिद्वन्द्विस्थिरतरनिरययात्राया एवार्हाः स्युरिति व्यतिरेकमुद्रयाऽधिगम्यते । न च गिरा किलानया मन आत्मीयं व्यसनाक्रान्तं वा क्रोधाक्रान्तं विपरिणेयम् तथा सति सुदर्शनमपि क्रुध्येदेवायःशकलैस्तापभरैरात्मनोऽवहेलाञ्जगत्यां मानवाधमाः कुर्वन्तीति तत्क्रोधे हि यूयं तस्य भक्तम्मन्या अनिष्टपरम्परासापत्स्यध्वे तस्मिन्दृढव्रता अपि । एतेन "तस्माच्चक्रं विधानेन तप्तं वै धारयेद् द्विजः । सर्वाश्रमेषु वसतां स्त्रीणाञ्च श्रुतिचोदनादि"त्यादिहारीतपाद्मीयादितयोदाहृतवचोनिचयो निरात्मकतामभ्यागच्छेदेवेति न किञ्चिदेतत् ।

इति चक्रं विभर्त्तीत्येतस्या वाचस्तदर्थस्य च विडम्बनादिग्दर्शनम् ॥

नन्वेवमपि "एभिर्वयमुरुक्रमस्य चिन्हैरङ्किता लोके सुभगा भवाम तद्विष्णोः परमं पदं ये गच्छन्ति हि लाञ्छिता" इत्याथर्वणिकश्रुतिर्नस्तप्ताङ्कनप्रक्रियया लङ्करोत्येव यथार्हमिति चेदिदं किल प्रत्यवस्थानं पुनः प्रतिविधानमभ्युदिताभ्यां तावत्ताभ्यां नातिरिच्यत इत्याचक्ष्महे । तत्रोपन्यस्तयुक्तिपूगप्रमाणपूगाविहाप्यनुसन्धातव्यौ । अधिकं त्विदमेव हि यच्छमदमयोगज्ञानाख्यान्तरङ्गासङ्कीर्णसाधकतमनान्तरीयकत्वासंसृष्टस्यैकस्यैवाकिञ्चित्करक्रियाकोटिकवाक्योपादानमकार्य्यैवाकार्य्यकारीत्यंशं तमेतमास्थायोक्तपद्यानुकार्य्युत्तराधिक्यमध्यवसातव्यम् । वस्तुतस्त्व-

७८ "एभिर्वयमित्यादि"पद पङ्क्त्या वा कल्पितया नाङ्कनसिद्धिरिति प्रतिपादनम् ।

स्माद्वचनान्मुमूर्षुस्वरूपानुसन्धानमेवाकलनीयं न तु मुमुक्षोरीषद्वा । फलस्य हि दृष्टात्मन एतस्यैवोपपत्तावदृष्टात्मनो नास्त्येव प्रतिपत्तिः । मानसामान्यविप्रतिपिद्धत्वात् । भारद्वाजीयतयाऽत्रोदात्हृतवादिवचस्तु वर्णितरीत्याऽभारद्वाजीयत्वेनाकार्य्यक्षममिति पर्य्यवसन्नम् । वचनगतबाधितप्रतिपत्तेरसद्वस्तुभावैकप्रमापकत्वात् । न हीदं चिन्हधारणं सर्वस्वामिनो विष्णोर्युज्यते । धारणस्य त्वस्य त्वचो विदग्धाया अयःपिण्डपिण्डिकामात्ररूपितायाः सर्वानुभवासिद्धत्वे कल्पान्तेऽपि सर्वस्वामिचिन्हधारणसंसर्गसार्पिषो वाऽत्यन्तासम्भवात् । भगवदायुधमिति तल्लाञ्छनमिति तेन पावित्र्यमिति तदेतन्मुक्तेः साधनमिति च वाक्प्रलापो बालिशतरानेवालं व्यामोहयितुम् । कुशलमतयस्तु जहसुर्हसन्ति हसिष्यन्ति त्रैकालिका इति स्थिते भरद्वाजादयश्चतुष्पात्कृत्यङ्किमिति वा वचोभिरात्मीयैः प्रमापयेयुरिति स्थूलाक्षं निमिच्य निश्चिनुयाः समाश्रित्यैव महाभागान्विशिष्टविज्ञाननेत्रेणासमन्तात् ॥

### एभिर्वयमित्यादिकल्पितपदपदार्थपरिहारः ॥

७९ "प्रते विष्णवि,, इत्यादिवचनादप्यतिक्रान्तवचनसजातीयादङ्कनदुराचारदूरीकरणम् ।

ननु "प्रते विष्णो अब्जचक्रे पवित्रे जन्माम्भोधिं तर्तवे चर्षणीन्द्राः। मूले बाह्वोर्दधतेन्ये पुराणा लिङ्गान्यङ्गे तावकान्यर्पयन्ति,, इत्यृग्वेदीयबाष्कलशाखावाक्यस्योक्तार्थानुग्राहकस्य सत्वान्न नो न्यूनता समुदीरितार्थप्रतिपत्तृणामिति चेन्मैवम् । शाखायाः किलास्या उत्सन्नत्वे तद्गततयोदाहृतेयं वागनितराध्ययनाध्यापनानुष्ठानानुष्ठापनादिव्यवहारगोचरा श्रुतिशरणैः श्रुतितयाऽविश्वास्या यतः । न हीयं गीः प्रक्रियामिमामवतार्य कल्पसूत्रप्रणेतृभिरितरैर्वा शास्त्रस्थैरात्मनिबन्धेषूपनिबद्धा क्वचिदप्यालक्ष्यते । यदीदं वचः शाखागतमेवाभविष्यत्सर्वेषामेवादराविशेषेणोपादानविषयतामुपापत्स्यत् । परमेतच्छृण्वन्तः शब्दतो वाऽर्थतो नाभ्युपगच्छन्तीति किमात्मिकाऽत्र श्रुतिमत्तायाः प्रतिपत्तिः । अन्तरा तां ताद्रूप्येण ग्रहणाकारा प्रवृत्तिरपार्थिकी पर्य्युपेयते । सति चैवं तदालम्बनाधीनतप्ताङ्कनप्रक्रिया नः निर्व्रणितवाक्याभासप्रतीतिसामान्येनाप्यपाकृता प्रमाणसर्वस्वपराहतेत्यवगच्छामः । एतावतैवार्थतत्वस्यास्य चरितार्थत्वात् । "तुष्यतु" नयेनेहापि पदपङ्क्तिमालम्ब्यास्वारस्यनिरूपणौपायिकविचारणायामुरुतरसङ्क्लृप्तसामग्रीमपास्तसमस्तसङ्ख्यावच्छङ्कासामान्यामुपादाय यथोदितदूषणपटल्येवानुसन्धातव्या तावतैवालम्भास्याप्रत्यूहत्वात् ॥

यत्तु रामार्चनचन्द्रिकायामानन्दवनेन राममाममाहात्म्यनामकपुस्तकान्तरे पुनरच्युताश्रमेण निर्णयसिन्धौ भट्टकमलाकरेण चेद्दशानूपूर्वीका श्रुतिरसावुदाहृता दृश्यत इत्यन्योक्तीरवलम्बमानम्मन्येनावेदितं वादिना तन्न। आनन्दवननामा रामानुजीय एवात्र कश्चिदेवं योजयिता यतः। यद्वा स चासौ तन्नामा तटस्थीभूय प्रसङ्गसङ्गत्या दुराचारमेतमुपन्यास्थत्पराभिमतस्यार्थस्यानुवादकतया यथायोगम्। न च शारदापीठपूर्वदेशिकान्तर्वर्त्तिनो वा वहिर्वर्त्तिन अच्युताश्रमनामानो रामनाममाहात्म्यप्रख्यापयितारो ह्युदपद्यन्त। तदभिख्यया विख्यातानान्तावत्त्रयाणामपि निर्विकल्पब्रह्मात्मैकत्वप्रतिपादकनिबन्धनिर्मातृतया तन्नाममाहात्म्यवर्णनप्रवृत्त्युत्पत्तेरनुपपत्तेः। वस्तुतस्तु तन्नाममाहात्म्यकृदच्युताश्रमनामा स्वाभीष्टसंसाधनाय परैरेवक्लृप्तो भवतीत्यवगम्यते। यदपि निर्णयसिन्ध्वादौ तदादिवाक्यमुदाहारि भट्टकमलाकरसूरिणा तदपि दग्धतनुवर्त्तमानव्यवहारानुवादमात्राभिप्रायकमुन्नेयम्। न तु तावद्व्यवहारस्यास्योपादेयतानिर्ग्राहकं जातु चित्। श्रुतित्वेन कल्पितवाक्ये किलास्मिन्नलीकप्रतीतिमत्तया पृथक्पदपदार्थपरीक्षणप्रयासो मनीषिणामसम्मत इति तद्दौरात्म्यं न संस्पृशामो वृथाऽऽलापपूरितत्वाद्दलावल्ल्याः।

इति "प्रते विष्णवि" त्यादिकृत्रिमवाक्यार्थतिरस्कारः॥

अथैवमपि "दक्षिणे तु भुजे विप्रो विभृयाद्वै सुदर्शनम्। सव्ये तु शङ्खं विभृयादिति ब्रह्मविदो विदुः" इत्याथर्वणिकमहोपनिषदि ब्रह्मसूक्तगता श्रुतिरेषा चक्राङ्कने नो नियोजयति भद्रङ्कर इति। बाढम्। तथापि ब्रह्मसूक्ते महोपनिषद्येतदक्षरानुपूर्वीकवाक्यस्यैवादृष्टतरतया दृष्टदुराचारनिरूपकतावच्छेदकधर्माक्रान्तत्वस्य सुतरामत्राप्रत्ययः। यावतीरत्र प्रायशः श्रुतितया वाचो योजयामास सर्वास्ता निर्वर्णितस्वरूपानतिरिक्तस्वरूपवत्य एवोदाहृताः। यद्यपि वाचन्तान्तामनभिज्ञमानवविमोहनकृते स्थलविभेदसञ्ज्ञानादिव्यक्तीकारकृतां वर्त्तयामास तथापि सूक्ष्मतरसमीक्षावशादखिलोऽयमुद्यमो वादिनो गारुडचेष्टितफक्किकाविशेषमेवानुकरोत्यत्युच्चैः। दुरावेशसमायोगात्क्वचित्कश्चिदावेदितोऽप्यर्थोऽत्रविचारविषयतां भजमानः पौनरुक्त्यादिदूषणप्राग्भारेण प्रतिपत्तृसमाधानाविभेदनानुरूपकृत्यात्मना ह्रीयमाणः पर्य्युपेयतेऽथाप्यपार्थविज्ञापकवचनतमःस्तोमसमाकलनप्रभवत्रासातिशयं सङ्ख्यावतां विदधानस्सन्तेषां संसर्गैकपावितमतिवैचित्र्याणां वा ताद्रूप्यमेवापादयति वैरू-

८० "दक्षिणे तु भुज„ इति, वाक्यस्य परं दग्धतनुकल्पितस्य यथावदेवतत्रार्थे तिरस्करणम्।

प्याहृयविकृतप्रत्ययोपधानसाक्षिकं पुनः पुनः । नैकाऽपि पदपङ्क्तीरुचिरार्थमुन्मृदिताऽप्रमाविलासलालनाशीलं ग्राहयत्यणुतरं वा । एतदर्थविघटनानुकूलपूतिगन्धाधिकरणभूरिभाषासमास्तरणशीलितत्वादेवासमन्तात् । "दक्षिणे तु भुजे विप्रा बिभ्रत्यायसलाञ्छनम् । शङ्खचक्रादिदुर्मत्या कलिमालिन्यमीलिता" इत्येव विश्रुततरस्य वाक्यस्य हि बृहन्नारदीयस्यान्तर्थे ज्ञापयितव्यत्वाच्च । यदि स्याः स्वीयवाक्यैकपरिगाम्यावेशवासितस्वान्तस्तदा, विनिगमनाविरहेण नारदीयवाक्ये तथाभूतः किन्न स्याः । विनिगमकं चेत्सान्निध्यादिलक्षणमभिव्याहर्तुमुत्सहसे तर्हि तत्सामान्यविधुरतयाऽस्ति प्रतिपादनं तावकीनमित्यवोचाम चासकृत्प्रागेव । वैलक्षण्यं चेत्केनचिदंशेन व्याहर्तुम्पुनरीहसे तथाऽपि प्रतिपादितोपपत्तिशतात्तदपि प्रत्याख्यातं वेदितव्यम् । उत्तानार्थकमित्थमपार्थकवाक्यं हीदं कृत्रिमतरमेव । कृत्स्नप्रामाण्यविगर्हितत्वात् । नैव त्वमात्मानमास्तिकञ्जानानो वा ज्ञापयमानः प्रवचनमात्रेणैव नीरसतरेण भवेरास्तिकः कल्पान्ते वा । न खल्वङ्गदाहादिकं कर्मास्तिकतायामस्ति किञ्चित्तन्त्रम् । नास्तिक्य एवासुरचर्यासमालम्बनभूते सदैवास्य तन्त्रत्वात् । पृथक्जनैककूट एव प्रचारयोगाय प्रतारकैरुपादीयमानोऽर्थो मतिमन्मानवेष्वधरपरिस्पन्दाय वा युज्यते कथञ्चित् । मत्यैव ह्यसारतरवस्तुव्रातप्रग्राहिण्या तदादैन्यकारसमास्पदत्वात् । न च महेशाद्याराध्यतमदैवतादिभ्यो विमुखीभूताश्च निरूढनिगमागमगम्यमानसमाचारेभ्य आस्तिकव्यपदेशभावमश्नुवीरन्नंशतो वा मानवा हन्त भवन्तः । न च पुनर्विप्रतिपत्तयो युष्मदादिविगीतसमाचारशीलिन्यः समुत्सादयितुमुदपद्यन्त इत्यद्भुतं नाम नामत आत्मवताम् । यथाऽवस्थितवस्तुव्यवस्थित्यै प्रवृत्तेस्तासां कृतकृत्यत्वात् । तप्ताङ्कनादिव्यवहारः पशुधर्मो न वेत्याकारां परित्यज्य विप्रतिपत्तिं तप्तचक्राङ्कनादिधर्मो वैदिको न वेत्येवंरूपामपि वा कश्चिदास्तिकात्मा प्रयुञ्ज्यात्परिहारकथासु वा । न कोऽपि कदाचिदेवं कुर्यादिति कृतमेतावता ॥

इति "दक्षिणे तु भुज" इत्यर्वाचीनवचननिराकरणम् ॥

अथ पाञ्चरात्रमहाकल्पमहीरुहं तावच्छरणमुपयातानां नो यथोदिताङ्कनावश्यानुष्ठानतत्प्रभवफलसमृद्धेरव्यग्रतया भद्रमेव सद्भूतानामिति । अत्रैवं पर्यनुयुञ्ज्महे किमिदं पाञ्चरात्रमृगादिवेदप्रामाण्योपनीतपदार्थप्रत्यायकविशिष्टयोग्यताकतयाऽभिमन्यत उ

८१ पाञ्चरात्रस्याप्रामाण्यप्रसाधनपुरस्सरं तप्ताङ्कनदुराचारतिरस्कारः ।

तदङ्गपुरोगमप्रत्यर्पितवस्तुसन्तानसन्धायकतयाऽऽहोस्वित्स्वातन्त्र्येण स्वार्थसमुद्योतनसत्तावदिति । नाद्यः । यथाऽवक्लृप्तोपन्यासधोरणीभिरनवशेषविशेषप्रसाधिनीभिः स्वप्रतिपाद्यनानार्थप्रतिपत्तेर्विनिषूदितत्वात् । नो खलु मानव्यक्तिविधाविभेदेषु "स्मृतिः प्रत्यक्षमैतिह्यं अनुमानश्चतुष्टयमि" ति मन्त्रप्रकीर्तितेषु पुनस्तज्जातीयवचोविशेषप्रत्यवसितेषु पाञ्चरात्रस्याऽसङ्ख्यानात् । न च "प्रत्यक्षमनुमानञ्च शास्त्रञ्च विविधागमम् । त्रयं सुविदितङ्कार्यन्धर्मशुद्धिमभीप्सता । आर्षन्धर्मोपदेशञ्च वेदशास्त्राविरोधिना । यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतर" इति स्मरणान्मनोर्विविधागमपदोपबृंहितात्पाञ्चरात्रस्यावगतिः सम्प्रतिपन्नेति साम्प्रतम् । विविधागमपदेनेह वा पाञ्चरात्रपरिग्रहस्यावास्तवत्वात् । अत्र हि शास्त्रपदं वेदस्यैव भवति वक्तृ पुरुषहितविशेषशासनात् । तदिदं मन्त्रार्थवादेतिहासपुराणादिना विविधागमपदविभेदबोध्येन प्रतीत्यालम्बनमित्येवोचितं नापरथा । लौकिकागमानामितरेतरमतिमात्रपरिकल्पितानामन्योन्याविरोधावभासभासितानाञ्चानुपादेयैकदेशीयत्वात् । यथाहु "रतीन्द्रियार्थविज्ञाने प्रमाणं श्रुतिरेव हि । श्रुत्युक्ताचारतो ग्राह्या ह्यागमानां प्रसज्यते"इति । अभ्युक्तरीत्या श्रुत्युक्ताचारसामान्यविरुद्धत्वादाचाराणाञ्च पाञ्चरात्राणां स्मृतिरेषा पञ्चरात्राणि नाभिमन्यत एवेति फलितम् ॥

नन्वितिहासरत्ने पञ्चरात्रमहिम्नः सङ्कीर्तिततया कथं तदपमानो विधीयतामिति । नैष दोषः । नारदादिपञ्चरात्रातिरिक्तपञ्चरात्रपदवेदनीयग्रन्थराशेरन्यादृशस्यैव ततो निगम्यमानत्वात्तेन च ब्रह्मात्मना समापादितैक्यातिशयानां तावद्देवतानामभेदप्रतिपत्तिप्रयोजकोपास्तेर्बीभत्सादिदूषणसमापन्नाङ्कनादिचेष्टाविशेषविधुराया आदिष्टत्वात् । अंशेनैकतमेन यथाकथञ्चित्सम्प्रतिपत्तावप्यंशैर्भूयोभिर्विप्रतिपत्तीनामेव प्रख्यातप्रमाणप्रत्ययातिशयशालिनीनां निष्कृष्टत्वात् । न हि तावत्तीर्थकारा गौतमजैमिन्यादयो मेनिरे हन्त पञ्चरात्राणि न्याय्यानि न वा निजनिबन्धेष्वंशतो वा निबबन्धुस्ते तानि कुत्र चित् । प्रत्युत तया तया वाचोयुक्त्या तानीमानि न्यक्कुर्वाणाः सन्दृश्यन्ते सहैव वार्त्तिककारैः । नापि कृष्णद्वैपायनाचार्याः प्रत्युतैतान्येते "एतेन शिष्टापरिग्रहा अपि व्याख्याता" इति ब्रह्मसूत्रेण निराचक्षते स्म । न चेदं मेयमेव पौरुषादिलक्षणं निराचष्टे सूत्रमिति सन्तोष्टव्यम् । मेयापनोदनविनोदस्य मानावधूननफलपर्यवसायित्वे तद्व्यपदेशादिहापि पञ्चरा-

अप्रत्याख्यानस्याभ्यर्हिततरत्वात् । न च पञ्चरात्रे तथाप्यभिपूज्यस्य विष्णोर्भगवतः संस्तूयमानतया वैदिकतरतया च तत्तत्वप्रतिपादकग्रन्थराशेरस्य कथं स्यादप्रामाण्यमित्याशङ्कितव्यम् । तत्वस्य हि विष्णोरनापेक्षिकस्य संवननीयत्वेऽपि तन्मिषेण विकृतालापप्रलापमयस्य तु पञ्चरात्रस्याप्रामाणिककृतिविशेषकोटिप्रविष्टस्यापाक्रियामात्रपात्रत्वात् । अभिधामात्रप्रत्ययमृते विष्णोरभिधेयविधेयधीर्वा तत्कैङ्कर्योपायप्रयोगशैली नालाङ्क्षिलार्थापूर्वोत्पादनप्रयुक्ताय कार्हि चित् । एवञ्च समुत्पादितवचनसजातीयवचनजातविग्रहावयवं नूनमिदं पञ्चरात्राख्यं वस्तु नान्यादृशतिरस्कारप्रयासविस्मयायावकल्पते । न हि चार्वितचर्वणपरिमाणमृते किमप्यपूर्वमस्यां वा पश्यामः पदपङ्क्तौ । न हि पुन"र्दग्धस्य दहनं नास्ती"ति न्यायं पैङ्गलानां परामृशन्तो निरसनकर्मण्यस्य प्रवर्त्तामहे प्रायशः समाश्रितावयवान्वाक्यात्मनो नाम तन्निष्ठान् । तथाऽप्यपभाषणविशेषमाप्रहरणार्हन्तु वृत्तं तावत्तत्र तत्रापाकरिष्यते । तथा हि "तपस्तपाँसि तीर्थानि पुण्ड्रो नाम नमस्क्रिया । आम्नायाः सकला मन्त्राः क्रतवः पूजनं हरेरि" ति पुरस्कृत्य कृत्रिमवाक्यं तापसंस्कारस्य सर्वतपस्समुदायसमानस्कन्धत्वं पुण्ड्रसंस्कारस्य सर्वपुण्यतीर्थस्नानसमानस्कन्धत्वं नामसंस्कारस्य सर्वकालकृतभगवन्नमस्कारसमानस्कन्धत्वं मन्त्रसंस्कारस्य सर्ववेदाध्ययनसमानस्कन्धत्वमित्यादिकं प्रलाप तन्निन्द्यम् । यथोक्तदिशा भारद्वाजीयतयोदात्हृतसंहिताया एवाप्रामाण्ये प्रसाधिते तद्वाक्यावयवस्यास्य सुतरामेव तथात्वाधिगमे तदेतदास्थाय कृतश्च विकृतालापः समं तपःसमुदायसर्वपुण्यतीर्थस्नानभगवन्नमस्कारसर्ववेदाध्ययनैर्देहदाहलक्षणतापसंस्कारपुण्ड्रसंस्कारनामसंस्कारमन्त्रसंस्काराणां पारिभाषिकाणामपि परमुपवर्णितगत्या प्रत्याख्यातानां प्रतिष्ठापनसरणिसामान्यसौष्ठवविहीनानां सम्बन्धसामान्यबन्धनासम्भवात् । तापनक्रियायाः पशुधर्मतया परिकीर्त्तिताया यावत्प्रमाणबाह्यतरत्वे नामग्रहणमात्रादपि किल्विषाधायकत्वे पुनस्तपश्चारणयोग्यतापरिमार्जकत्वे च कथं सर्वतपःसमुदायसमानस्कन्धता । पुण्ड्रकर्मणोऽप्यकिञ्चित्करत्वे च विफलप्रयासविषयत्वे सर्वपुण्यतीर्थस्नानसमानस्कन्धता वा किमात्मिकेति मतिं मतिमतामाराधनयोपादाय यथावद्विभावयेः । दाम्भिकनामसंस्कारस्यापप्रथाविभेददूषितस्य ते निरर्थस्य श्रवणादेव तामसप्रत्ययसमुत्पादनैकयोगयोग्यत्वे श्रोतॄणां कथं नु सर्वकालकृतभगवन्नमस्कारसमानस्कन्धत्वम् । मन्त्रसंस्कारस्य तु प्रायेणावैदिकस्य पुनः परमशि-

वादिदेवताविद्वेषरूषितस्य सर्ववेदाध्ययनसमानस्कन्धत्वं ननु "मुखमस्तीति वक्तव्यं दशहस्ता हरीतकीति" न्यायमुपसेवत एव। यागसंस्कारस्य वा यथाऽवस्थितयावद्यागवस्तुव्यवस्थापराभूतस्य च शिष्टापरिग्राह्यस्य सर्वक्रतुसमानस्कन्धत्वकथनं पृथग्जनैकसंमोहनायैवालं न तु जात्वधिगतशास्त्रीयविचारसरणीनां पुरोऽवधानायावकल्पते। न हि "यत्ते पवित्रमर्चिष्यग्ने विततमन्तरे" त्यादिका श्रुतिरीषद्वा व्यवहारानमून् संस्कारतयाऽभिधत्ते प्रत्युत तात्पर्यमर्यादयैतेषामपार्थवर्गीयतामेवाभिद्योतयत्युचितगत्या। न चेह पावित्र्यपदं कुत्सितार्थं त्वदभिप्रेतं तप्ताङ्कनादिलक्षणं ध्वनयति किं तर्ह्यग्निगतं हविःप्रदानादिना सन्तर्पयन्तं यष्टारं भूरिप्रभावोपलक्षितपावित्र्यमात्मकामनाप्रपूरणाय प्रब्रूते। इतरथा सूक्तस्योपक्रमपरामर्शोपसंहाराणां प्रतिपत्तिर्हि सन्नियता प्रतिबध्येत। न हीदमवरोधनं सहन्ते कल्पसूत्राणि लेशतो वा नापि तेषां विगर्हाविषयः प्रचारलेशाय वाऽलं मतिमतामितिस्थिते उक्तिर्हन्त तावकीना निरात्मिकेति विजानते हि वेदविदः। न च पवमानसूक्तमुदितार्थश्रवणमस्त्युपन्यस्तरूपोपपन्नत्वात्। पराकृता अपि दुर्युक्तयो नेह पुनः पराकरणमर्हन्ति। सकृत्प्रयुक्ताया एवं हि पराकृतेः सर्वत्र कृतकृत्यत्वात्पौनरुक्त्यप्रसङ्गासम्भवाच्च॥

८२ पाद्मसंहितावचनानां बृहन्नारदीयादिविपक्षवचनैर्निराकरणप्रदर्शनम्।

यत्तु पाद्मसंहितां पुरस्कृत्य "पद्माक्षमालां ग्रीवायां लम्बयेत् साधकः शुचिः। हारे हेममयं चक्रं सर्वविघ्नोपशान्तये। जपकाले तथा चक्रशङ्खाकृति यथा तथा। शार्ङ्गखड्गगदाकारं लाञ्छनं लाञ्छयेत्सुधीः। शिरस्यवयवे बाह्वोर्वक्षोभुवि चतुर्मुख। चक्रादिपञ्चाभिज्ञानलक्षिताङ्कपरिष्कृतम्। पुरुषं दूरतो दृष्ट्वा भूताद्या भयविह्वलाः। विद्रवन्ति तथा घोराः पापा वीक्षणमात्रतः। विनश्यन्ति तथा पुण्यपुञ्जानि प्रविशन्ति च। प्रणमन्ति तथा देवा देवर्षिप्रवरास्तथा। अकृत्यमपि कुर्वाणो भुञ्जानो वा यतस्ततः। पापैर्न लिप्यते देही चक्राद्यायुधलाञ्छितः। हव्यं कव्यं च दातव्यं तस्मै दातव्यमक्षरमि" ति वचोजातं प्रक्षिप्ततरमुपन्यस्तं तदेतद्यथोपपादितप्रमाणवचोभिः पुनः प्रत्यर्थिप्रमाणवाग्भिः "पतितं तप्तलिङ्गाढ्यं चक्राङ्कितमथाऽपि वा। वाङ्मात्रेणापि नार्चेते,, त्याद्याभिः प्रत्याख्यातं वेदितव्यम्। न चेह वाक्ययोः पाक्षिकयोरनयोर्बलाबलविचारणया बलवत्ता स्वोदाहृतानामस्तीति वा युक्तमावेदयितुम्। प्रमाणकार्त्स्न्योपशोभि "पतिते" त्याद्युत्तरपक्षीयपद्यानामेव

बलवत्त्वात् । सत्येकस्मिन् वा बाधके साधकसहस्रस्याप्यकिञ्चित्करत्वाच्च । विपर्ययेणातो यावन्मानवचनोपद्रुततया 'शार्ङ्गशङ्खगदाकार, मित्यादीनां दौर्बल्यस्याथ निग्राह्यताया: सम्प्रत्ययात् । तप्ताङ्कनादिचेष्टाविशेषकर्त्तॄणां घोरतरतामसाकारतया पुनः पाप्मप्रभवविरूपविन्यासतयाऽऽत्मदर्शनमात्रत एव विद्रवन्तीति युक्तमेवोक्तम् । ततोऽप्यमीषां विलक्षणभूतादिजन्मधारित्वात् । विनश्यन्तीति तु न युक्तम् । भूतजन्मोपमर्दकसंस्कारप्रादुर्भूतेरप्रस्तुतत्वात् । सति चैवं पुण्यपुञ्जप्रवेशनमुपपद्यते दूरापास्तम् । दर्शनकर्मीभूतानाममीषां पुण्यसरण्या एव दवीयस्त्वात् । "प्रणमन्ति तथा देवा देवर्षिप्रवरास्तथे" ति पदविन्यासं परित्यज्य "प्रकुप्यन्ति नराः सर्वे नार्य्यो वा बाल्यभाविता" इत्येव न्याय्यः प्रतिपत्तव्यः । पापप्रचारा ह्यमी अङ्कितगात्रा न लिप्यन्ते पापैरित्युक्तिः पुर एव पापावतामा प्रवर्त्ततां हव्यकव्यदानविषया वा सा कदाचिदित्यलमलीकवस्तुकीर्त्तनेन॥

८३ पुनरप्यङ्कनकर्मणि कल्पितवाक्यनिराकृतिः।

यदपि विष्णुमन्दिरसंहितावचनतया "प्रतिष्ठादिवसञ्ज्ञात्वा ऋत्विग्भिर्द्विजसत्तमैः । एकान्तिमुनिमुख्यैस्तु कृतचक्रादिलक्षणैः । यजमानः प्रकुर्वीत वेद्यादिस्थापनं पुर" इति विनिवेदितं तदप्येतदाधिगतातीतविषयावतारितखण्डनयुक्त्यादिसदनमेवावसीयताम् । अधिकन्तु वेदबाह्योऽयमर्थस्तप्ताङ्कनदुर्नामा ऋत्विग्द्विजसत्तममुनिमुख्ययजमानवेद्यादिसम्भारेभ्यो नियुतयोजनविप्रकृष्टो न तैरेतैः सन्निकृष्यते कल्पान्तेऽपीति वेदितव्यम् ॥

८४ अत्रार्थे तज्जातीयवाक्यान्तरनिराकृती रूपान्तरेण।

यदप्येतदुच्यते । "एवं तदीया विप्राश्च क्षत्रिया वैश्यजातयः । मौद्गल्याद्यास्तथाऽन्ये च न तच्चिह्नविवर्जिताः । भवेयुस्सर्वदा तस्माच्छङ्खचक्रगदाम्बुजैः । लौहैरनलसन्तप्तैस्तत्तन्मन्त्राधिवासितैः । पूजितैरर्घ्यगन्धाद्यैराङ्कितव्याः क्षणेन तु । त्रय्यन्तज्ञानसम्पन्ना यथोक्ताचारनिष्ठिताः । विप्राद्यास्ते च शूद्राश्च यदेवं कृतलक्षणाः । तदा तु योग्या विज्ञेयास्समयश्रवणादिषु । शास्त्रोदितासु सर्वासु सामग्रीषु महामते । यागोपकरणान्येवमर्घ्यपाद्यादिकान्यपि । संलाञ्छ्यानि यथायोगं शङ्खचक्रादिलक्षणैः । तथा यानासनादीनि विभोस्सर्वाणि यत्नतः । स्वात्मोपकरणं सर्वमासनादिविवर्जितम् । अङ्गुलीयकपर्य्यन्तं सर्वमुष्णीषपूर्वकम् । चक्रादिलाञ्छितं कुर्यात्तदीयाश्च गवादयः । विप्रादिवल्लाञ्छितव्यास्तदीया भूरुहादयः । लाञ्छित-

ङ्या यथायोगं शङ्खचक्रादिलक्षणैः । आधारकाद्याः कर्मण्या एवं चक्रादिलाञ्छिताः। देवतान्तरचिन्हैस्तु अकर्मण्यास्तु लाञ्छिता,, इति पारमेश्वरसंहितावाक्यतया तत्प्रत्यु-च्यते । अर्थे हन्तास्मिन्दुराग्रहग्रहग्रस्तमानवापसदैरारचितोऽयं वाङ्निकरो नार्थो वाऽस्ति न वा तदनुयाय्युपकल्पितः । अपि तु बालिशसमाचारशैलीसमाश्रयो विभाव्यते किलाकिञ्चित्करवस्तुवर्णनाभासमलिनीभवन्मानसत्वादेवैवमादिनिरूपका-णाम् । उदितयावद्वस्त्ववकाशैकदेशावच्छेदेनाङ्कनमपेक्ष्य यावद्देशावच्छेदेनैव चेद-भिप्रेयेत तदा दाहप्रत्ययपर्यास्पदीभूतवस्तुसर्वस्वमनुभूयमानमाकृतिमेव भस्मनो ज्ञा-पयतीति सेवका एवासमन्तात्तस्य पर्य्यवस्येयुर्भत्राद्दृशाः सर्वे एव हीति वैमनस्यमेव तस्मिन्नुज्झित्वैव वर्त्तितव्यमापद्यते यथावत् । एवञ्चेमां प्रक्रियामङ्कनस्योपाददानै-रुत्सादयितव्यैत्र श्मशानभूमिरात्मव्यापारप्रत्यनीकभावभावित्वादासमन्तात् । वस्तु-तस्तु न हि वाक्यनिकरविनिवेदनमुपादानायालं साहसमात्रेण समासादितवस्तुवृ-त्तानाम् । उपादानयोग्यतापरिष्कृतवाक्यव्यक्तेरेव भूयर्यनुवादसम्पत्सम्पन्नाया वि-चारवन्मतिपथसमारोहार्हत्वात् । न चार्वाचीनचेतोविभ्रमसञ्जननमात्रेणैवात्मानं कृतकृत्यम्मन्येथाः । विचारकशार्दूलानां समीक्षाबलात्तदादिदौरात्म्यव्यक्तीकारस्यै-वाराद्दुपस्थिततरत्वात् । नो खल्वत्यासन्नविघटनाविशेषसम्भारानननुसन्धाय स्वा-भीष्टघटनानुकारिणीं चेष्टां कश्चन निश्चिनुयात्सुस्थात्मेति स्थितौ वस्तुसर्वस्वदाहन-कर्मणो विफलप्रवृत्त्यात्मनो बीभत्सानिलयकिल्बिषविशेषभुवो विरम्यतां तावत् । समाचारिततद्दुःसमाचारसञ्जातादेनसो विनिवृत्त्यर्थमुपपन्नप्रायश्चित्तप्रक्रियामवल-म्बस्व यथाशास्त्रम् । तेन चात्मानं पावयस्व यथोद्देशं ययैव गत्या पातकवन्तः सार्वकालिकास्तेभ्योऽपावृत्तप्रायाः प्रतिपद्यन्ते लोकतश्शास्त्रतश्च ॥

यत्पुनरुच्यते "एवं विज्ञापिताः शिष्याश्चक्रलिङ्गसमन्विताः। देवा एव भवन्त्वेते नान्येषां कर्मकारकाः । इति तेनाभ्यनुज्ञातश्चक्र-लिङ्गधरो भवेत् । संस्कारो व्यञ्जितात्मानः पतिचिह्नेन ला-ञ्छिताः । देवाभिधानवन्तश्च त्यक्तास्पदपरिग्रहाः । तमेव स-र्वभावेन संप्रयान्तु महामुने । चक्रादिधारणं पुंसां परसम्बन्धवेदनम् । पतिव्रता-निमित्तं हि वलयादिविभूषणमि,, त्यसावपि वाक्यसमूहो विष्णुतत्वपटलीय इति सोऽपि यथोपन्यस्तवाक्यसहोदरायमाणो यथोपदर्शितदूषणगणग्रस्तो वर्त्तत एव विस्तरशः । विशेषस्तु निजचक्राङ्कनं निस्सहायं माभूदिति सहायीकृतमत्र लि-

८५ पुनरेवात्र दुष्टवाक्यानामन्यादृशानामुपमर्दनम् ।

ङ्काङ्कनं योजकजनेन समानयोग्यतावत् । न हि लोके वलयादिभूषणमनन्यपतिकाया एव पत्न्या उपपद्यते । अनेकपतिकास्वपि वाराङ्गनास्वनवरतमेव तद्दर्शनात्प्रत्युत तदेताद्विन्यासविशेषबाहुल्यैः । किमभिप्रेत्यदमुदाहरणप्रदर्शनमिति चेत्प्रचलद्व्यवहारसरण्याऽप्यपरिज्ञानप्रयोज्यमेवैतदिति विजानीयाः । न च निरभिप्रायप्रसाधनेन देवव्यपदेशपुरस्सरमभिकल्पितविकृताभिधानेनासम्पृक्तसमस्तेतरसत्सामग्रीपरम्पराकेण देवावाप्तिर्युक्तग्रहा । तदवाप्तिप्रयोजकनियतव्यक्तीनामभिधानस्यैतादृशस्यान्यथासिद्धत्वात् । न चापि त्यक्तास्पदपरिग्रहताऽस्त्यङ्गदाहवताम् । परिग्रहपिशाचीप्रेताभिरूपसन्धारणस्य त्वस्याशेषानर्थकार्मणस्य तैरेतैः परिगृहीतत्वात् । न चेह तप्ताङ्का भगवद्दास्यवन्तो वा तदाज्ञानुवर्त्तिनो भवेयुस्तदनन्ययाजिनो जातु चित् । दास्यादेरमीषां तप्तलोहशलाकामात्रगोचरत्वात् । एवंविधानाञ्चेद्देवसञ्ज्ञाव्यपदेश्यत्वं तदा देवा हन्त किमाश्रयेयुः वैदिकधर्मानुष्ठातारो निरवद्यनिजाचारशीलिनः कं वोपसर्पेयुः । एवं तर्हि वायसगणा मरालभावमृच्छेयुः मरालाः पुनर्हीनपदभाजो भवेयुरित्यनिष्टमेवासमन्तादिति स्थिते तत्त्वं वस्तुनो दग्धतनूनां विभावयन्तु सुधीवराः ॥

नन्वेवमपि "यज्ञेन यज्ञमयजन्त देवा" इत्यस्याः श्रुतेरङ्कितगात्राणामुदीरितयोग्यतावत्वमव्याहतम् । मास्मैवं मतिं कुर्याः । शिवारुदितगान्धर्वगानयोः स्वरूपसौरभ्यसमानयोगक्षेमत्वापत्तेरपरिहार्यत्वात् । क्व वा जम्बुकालापविलापावलापात्मा दग्धाङ्गदुर्वादः । क्व वा पुनर्दिव्यानन्दसन्दोहदायिश्रुतिभगवतीतात्पर्य्यलक्ष्मीविलासः । न स्वस्वियं दग्धतनूनां कर्माण्यभिधत्ते श्रुतिव्यक्तिः । किं तर्हि यज्ञमेव कल्पादिकल्पपादपविनिबद्धमनार्यजनदुर्वासना ऽसहा विराजते । न हि श्रुतौ "यज्ञो वै विष्णुरि" त्येतस्यां विष्णुपदं तदभिप्रेतविकृताकारतया तमेतमावेदयति । अपि तु तदसम्पृक्तप्रत्ययविभेदसमास्पदीभूतमप्रमेयस्वरूपप्रतिष्ठं निर्ब्रूते । तस्यैव तत्तात्पर्यविशेषविषयत्वात् । अस्तु वा "तुष्यतु" नयेन तदभिधाय्यसौ यथाकथञ्चित्तथापि तदभीष्टं विघटयत्येवाङ्कनकृत्यमण्वप्यसहमानं सत्समुदितमानावलीसन्निवेशवशंवदमत्यादरात् । यथा च व्याकारि "यज्ञेन यज्ञमयजन्त देवा अग्निनाऽग्निमयजन्त देवाः । अग्निः पशुरासीत्तमालभन्त तेनायजन्तेतिच ब्राह्मणमिति" परमर्षिणा यास्केन । नापि देवशब्दस्त्वदभ्यूहितलाञ्छिततनूर्निर्दिशति तस्य प्रज्ञा-

८९ "यज्ञेने"ति श्रुतिं देहदाहक्रियायां योजितवतो दुरात्मनो धिक्कारविभेदः ।

पतिप्राणरूपाणां मघवदादिरूपाणामवबोधनात् । "यत्रर्षयः प्रथमजा ये पुराणा" इत्यपि श्रुतिवचः प्रकरणान्तरपठितत्वान्नेहोदाहरणमर्हति । उदाहरणेऽपि "यज्ञेने" ति मन्त्रवर्णवदुदीरितार्थसमन्वयभाग्युन्नीयते । अस्यैव वैशम्पायनधानञ्जय्यादिभाष्योन्नीतत्वादर्थरत्नस्येति जानीहि ।

न च "ये कण्ठलग्नतुलसीनलिनाक्षमाला ये बाहुमूलपरिचिन्हितशङ्खचक्राः ।

८७ काष्ठमालाविषयकाविचारप्रसक्तौ बहुतरोपपत्तिबलान्मानबाह्यत्वाच्च तद्धारणाप्रामाण्यप्रतिपादनम् ।

ये वा ललाटफलके ल ऊर्ध्वपुण्ड्रास्ते वैष्णवा भुवनमाशु पवित्रयन्ती"ति वचनं मन्तव्यं निराबाधम् । "ते वैष्णवा भुवनमाशु विनाशयन्ती " ति स्कान्दवचसा तथ्यांशं प्रकटीकुर्वता पराहतत्वात् । तुलसीदलमालसंसेवनस्यैव युक्तत्वे न तु तत्काष्ठकणिकाविनिर्मितमालाया धारणं सफलं वा महाजनमान्यं वा श्रुतिस्मृतिप्रमाणसन्दृब्धं वोपपद्यते । त्रिभिरप्येतैः प्रमाणवर्त्मभिरस्पृष्टत्वादशेषजनसमाराध्यैः । न हि नलिनाक्षाणामपूर्वोत्पादकगुणवत्ताऽस्ति । गर्भस्यैषामुदितार्थाप्रयोजकविकारभावगृहीतत्वादतोऽन्यस्या अपि योग्यताया मृग्यत्वाच्च । न च "सुवर्णमणिमुक्तास्फाटिकपद्मपत्रबीजाक्षाणामन्यतमेनाक्षमालां कुर्याद्ध्यायन्वामहस्तोपरि व्यागणयेदि " ति शङ्खस्मृत्या विहिता खलु नलिनाक्षमाला मनोहरा कथङ्कारं त्वयाऽपह्नूयत इत्याशङ्कनीयम् । भूरिपुस्तकपाठेभ्यः स्फाटिकाक्षाणामन्यतमेनाक्षमालां कुर्यादित्यस्यैव पाठस्य पद्मपत्रबीजपदांशवर्जं ननु सम्प्रत्ययात् । अन्ते त्वक्षमालां कुर्यादित्यबाधितासन्दिग्धपदविशेषसमायोगाच्च । न च काष्ठस्यापि तुलस्याः समुपादेयता मालाकारव्यापारे सुग्रहा । बिल्वकाष्ठस्यापि तथात्वग्रहस्य दुर्निवारत्वापत्तेः । बिल्वानां पञ्चानां सामान्येन तस्मिन्नितरेषु वा त्रिष्वपि परिशिष्टेषु तथात्वाभावेन युज्यत एवातथात्वाभावस्तुलसीकाष्ठेऽपि स्वन्यायात् । न चापि जम्बीरामलकबिल्वादीनां मालागारपरिणामयोग्यताविरहवत्त्वेऽप्यस्त्येव तद्वत्ता तत्साधारण्याभावेन काष्ठे खलु तुलस्या इति साम्प्रतम् । बिल्वत्वावच्छिन्नत्वस्य च मूलस्कन्धशाखापलाशत्वाद्यवच्छिन्नत्वस्य सामयिकतया प्रतिपद्यमानस्याविरूपत्वे मालाकारयोग्यतापरिणामाभाववत्वस्याप्यविरूपात् । नो खल्वेतत्काष्ठगतवैलक्षण्यविशेषाभिधायि वचनं किञ्चित्पश्यामः श्रुतीनां वा स्मृतीनामायुर्वेदप्रस्थानगानां वा कुत्रचित् । कण्ठगतविकृतिविशेषनिर्मार्जकतया धारणमस्य मन्यमानं जानीषे तद्वयवान्तरावच्छेदेन बिल्वान्तरविकारविशेषोपयोगप्रकारस्या-

